नाहूमधरोऽथक्रौ रविणा नरस्त स्वयः। नोत्पत्तिर्ज्ञायते तस्य नादेयःपश्चितैरपि ॥ एकचूडो द्विचूडश्च त्रिशिखः पञ्चचूडकः। सहस्रशिखरूपश्च इन्द्रकेतुरिवस्थितः ॥ सूर्यपुत्रोऽग्निपुत्रश्च ब्रह्मविष्णुशिवात्मजः। अनेकशिखरः केतुर्ग्रहपीडां व्यपोहतु ॥ अथकेतुरित्येकवचनं जात्यभिप्रायम्। धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः। गृध्रासनगता नित्यं केतवःस्युर्वरप्रदाः॥ सर्वे किरीटिनःकार्या ग्रहालोकहितावहाः। स्वाङ्गुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरंसदा ॥ इत्यादिषु बहुत्वदर्शनात् ॥*॥ अत्र केतुचारोवाराहीतो लिख्यते।तयथा। तत्रादावागमप्रदर्शनार्थमाह। गार्गीयं शिखिचारं पाराशर मसितदेवलकृतञ्च। अन्यांश्च बहून् दृष्ट्वा क्रियतेऽयमनाकुलश्चारः॥ अथोदयास्तमयलक्षणमाह। दर्शनमस्तमयो वा न गणितविधिनास्य शक्यते ज्ञातुम्। दिव्यान्तरिक्षभौमास्त्रिविधाःस्युः केतवोयस्मात् ॥ अथकेतूनां दिव्यवर्जितानामन्येषां स्वरूपमाह ॥ अहुताशेऽनलरूपंयस्मिंस्तत् केतुरूपमेवोक्तम्। खद्योतपिशाचालयमणिरत्नादीन्



परित्यज्य ॥ दिव्यान्तरीक्षभौमानां केतूनां ल०। ध्वजशस्त्रभवनतरुतुरगकुञ्जराद्येष्वथान्तरीक्षास्ते। दिव्या नक्षत्रस्था भौमाः स्युरतोऽन्यथाशिखिनः ॥ केतूनां संख्यां मतान्तरेणाह। शत मेकाधिक मेके सहस्र मपरे वदन्ति केतूनाम्। बहुरूपमेकमेव प्राह मुनिर्नारदः केतुम् ॥ मतान्तराण्युक्त्वास्वसिद्धान्तमाह। यद्येको यदिबहवः किमनेन फलन्तु सर्वथा वाच्यम्। उदयास्तमयैः स्थानैः स्पर्शैराधूपनैर्वर्णैः ॥ तेषां फलपाकनियमार्थमाह ॥ यावन्त्यहानि दृश्यो मासास्तावन्त एवफलपाकः। मासैरब्दांश्च वदेत् प्रथमात् पक्षत्रयात् परतः ॥ शुभस्य केतो ल०। ह्रस्वस्तनुः प्रसन्नः स्निग्ध ऋजु रचिरसंस्थितः शुक्लः। उदितोवाप्यभिदृष्टः सुभिक्षसौख्यावहः केतुः ॥ अशुभस्य केतो ल०। उक्तविपरीतरूपो न शुभकरो धूमकेतुरुत्पन्नः। इन्द्रायुधानुकारी विशेषतो द्वित्रिचूलो वा ॥ अधुना केतुसहस्रस्य लक्षणं सफलं विवक्षुस्तत्रादावेव रविजाः पञ्चविंशतिः केतवो भवन्ति तेषां लक्षणमाह ॥ हारमणिहेमरूपः

केतु:

किरणाख्यः पञ्चविंशतिः सशिखाः । प्रागपरदिशो दृश्यान्तपति विरोधा दक्षा रविजाः ॥ अग्निपुत्रा स्तावन्त दृश्याह । शुकदहनबन्धुजीवक ला चाचतजोपमा हुताशसुताः । आ ग्नेय्यां दृश्यन्ते तावन्त स्तेपि शि खिभयदाः ॥ मृत्युसुता स्तावन्त आ ह वक्रशिखा मृत्युसुता रूक्षाः कृ ष्णाश्च तेपि तावन्तः । दृश्यन्ते याम्या यां जनमरकावेदिन स्तेच ॥ भूमि पुत्रा द्वाविंशतिरेवाह । दर्पणवृत्ता कारा विशिखाः किरणान्विता धरा तनयाः । चुद्भयदा द्वाविंशति रैशा न्या मम्बुतैलनिभाः ॥ चंद्रसुता स्त्र यः । शशिकिरणरजतहिमकुमुद कुन्दकुसुमोपमः सुताः शशिनः । उत्तरतो दृश्यन्ते चयः सुभिचावहाः शिखिनः ॥ ब्रह्मदण्ड स्वस्य ल० ॥ ब्रह्मसुत एक एव त्रिशिखो वर्णै स्त्रिभि र्युगान्तकरः । अनियतदिक् सम्भवो विज्ञेयो ब्रह्मदण्डाख्यः ॥ एकाधिकं शतं कथित मन्यानि नव शतान्यकेतूनि कथनीयानी त्याह । शत मभिहित मेकाधिक मेकेन विरहिता न्यस्मात् । कथयिष्ये केतूनां शतानि नववर्षः स्प ष्टैः ॥ शुक्रपुत्रा श्चतुरशीतिसङ्

केतु:

ख्या स्तानाह । सौम्येशान्यौ बदर्य शुक्रसुता यान्ति चतुरशीत्या ख्याः । विपुलसिततारका स्ते स्निग्धाश्च भ वन्तितीव्रफलाः ॥ षष्टिः शनैश्चर पुत्राः । स्निग्धाः प्रभासमेता द्विशि खाः षष्टिः शनैश्चराङ्गजाः । अति कष्टफला दृश्याः सर्वेचैतेकनकसं ज्ञाः ॥ गुरुपुत्राः पञ्चषष्टिः । विक चा नाम गुरुसुताः सितैकताराः शिखापरित्यक्ताः । षष्टिः पञ्चभिर धिका स्निग्धा याम्याश्रिताः पापाः ॥ एकपञ्चाश बुधपुत्राः । नातिव्यक्ताः सूक्ष्मा दीर्घाः शुक्ला यथेष्टदिक्प्र भवाः । बुधजा स्तस्करसंज्ञाः पापफ ला स्त्वेकपञ्चाशत् ॥ भौमपुत्राः ष ष्टिः । चतजानलाऽनुरूपा स्त्रिचूल ताराः कुजात्मजाः षष्टिः । नाम्ना च कौङ्कुमा स्ते सौम्याशासंस्थिताः पा पाः ॥ चयस्त्रिंशद्राहुपुत्राः । त्रिंशत् त्र्यधिका राहो स्ते तामसकीलकाः इ तिख्याताः । रविशशिगा दृश्यन्ते तेषां फलमकचारोक्तम् ॥ अर्कचा रोक्तांतामसकीलकसंज्ञाराहुसुताः केतवहत्यादिनेत्यर्थः । विंशत्यधि कं शत मग्निपुत्राणाम् । विंशत्य धिक मान्य च्छत मग्ने र्विश्वरूपसं ज्ञानाम् । तीव्रानलभयदानां ज्वा

केतुः

चामराकाभिरा कुलतनूनाम् । सप्त सप्तति वायुपुत्राः । श्यामारुणा वितारा श्चामररूपा विकीर्णदीधितयः । अरुणाख्यास्ते वायोः सप्त च सप्ततिः पापदाःपरुषाः ॥ प्रजापतिसुतान् ब्रह्मणःपुत्रांश्चाह । तारापुञ्जनिकाशाः गणका नाम प्रजापतेरष्टौ । द्वे च शते चतुरधिके चतुरस्रा ब्रह्मसन्तानाः ॥ द्वात्रिंशद्वरुणपुत्रा नाह । कङ्का नाम वरुणजा द्वात्रिंशद् वंशगुल्मसंस्थानाः । शशिवत् प्रभासमेता स्तीव्रफलाः केतवः प्रोक्ताः ॥ षण्णवतिःकालपुत्राः । षण्णवतिः कालपुत्राः कवन्धसंज्ञाः कवन्धसंस्थानाः । पुण्ड्रा भयप्रदाः स्युर्विरूपतारा स्तु ते शिखिनः ॥ नव विदिक्पुत्राः सर्वेषां च संख्या मन्येषाञ्च विशेषं वक्ष्यामीत्याह । शुक्लविपुलैकतारा नव विदिशां केतवः समुत्पन्नाः । एवंकेतुसहस्रं विशेष मेषा मतो वक्ष्ये ॥ तत्र ये दृश्यन्ते तेषां लक्षणं वक्तुकाम स्तत्रादावेव बलाकेते र्लक्षणमाह । उदगायतो महान् स्निग्धमूर्त्ति रपरोदयी बलाकेतुः । सद्यः करोति मरकं सुभिक्षम प्युत्तमं कुरुते ॥ अस्थिकेतोः शस्त्राख्यस्य ल० । तल्लक्ष

केतुः

णो ऽस्थिकेतुः सतु रूक्षः क्षुद्भयावहः प्रोक्तः । स्निग्ध स्तादृक् प्राच्यां शस्त्राख्यो डमरमरकाय ॥ कपालकेतो र्ल० । दृश्यो ऽमावास्यायां कपालकेतुः स धूम्ररश्मिशिखः । प्राङ्नभसो ऽर्द्धविचारी क्षुन्मरकावृष्टिरोगकरः ॥ रौद्रकेतोर्ल० । प्राग् वैश्वानरमार्गे शूलाग्रःश्यावरूक्षताम्रार्च्चिः । नभस स्त्रिभागगामी रौद्र इति कपालतुल्यफलः ॥ चलकेतोर्ल० । अपरस्यां चलकेतुः शिखया याम्याग्रयाङ्गुलोच्छ्रितया । गच्छेद्यथायथोदक् तथातथा दैर्घ्य मायाति ॥ सप्त मुनीन् संस्पृश्य ध्रुव मभिजित मेवच प्रतिनिवृत्तः । नभसो ऽर्द्धं भाग मित्वा याम्ये नास्तं समुपयाति ॥ हन्यात् प्रयागकूलाद् यावदवन्तीञ्च पुष्करारण्यम् । उदग ऽपि च देविका मपि भूयिष्ठं मध्यदेशाख्यम् ॥ अन्यानपिच स देशान् क्वचित् क्वचिद्धन्ति रोगदुर्भिक्षैः । दशमासान् फलपाको ऽस्यकैश्चिदष्टादश प्रोक्तः ॥ श्वेतकेतोर्ल० । प्रा गर्द्धरात्रदृश्यो याम्याग्रः श्वेतकेतु रन्यश्च । कइति युगाकृति रपरे युगपत्तौ सप्तदिनदृश्यौ ॥ स्निग्धौ सुभिक्षशिवदौ तथाधिकं दृश्यते कनामा यः ।

थिवं हन्यात्। बहुलासु कलिङ्गं रोहिण्यां शूरसेनपतिम्॥ औशीनर मपि सौम्ये जलजाजीवाधिपंतथार्द्रासु। आदित्ये ऽश्मकनाथं पुष्ये मगधाधिपं हन्ति॥ असिकेशं भौजङ्गे पित्र्ये ऽङ्गं पाण्ड्यनाथ मपि भाग्ये। औज्जयनिक मार्यमणे सावित्रे दण्डकाधिपतिम्॥ चित्रासु कुरुक्षेत्राधिपस्य मरणं समादिशेत्तज्ज्ञः॥ काश्मीरककाम्बोजौ नृपती प्राभञ्जने न स्तः॥ इक्ष्वाकुरलकनाथ श्च हन्यते यदि भवेद्विशाखासु। मैत्रे पुण्ड्राधिपतिं ज्येष्ठासु च सार्वभौम वधः॥ मूले त्वन्ध्रकपती अप्ये दैवे काशिपो मरणमेति। यौधेयकार्जुनायनशिबिचैद्यान् वैश्वदेवे च॥ हन्यात् कैकयनाथं पाञ्चनदं सिंहलाधिपं वाङ्गम्। नैमिषनृपं किरातं श्रवणादिषु षट्स्विमान् क्रमशः॥ केतोर्विशेष माह। उल्काभिताडितशिखः शिखी शिवः शिवतरो ऽभिदृष्टो यः। अशुभः स एव चोलानवगाणसितहूणचीनानाम्॥ विशेषान्तरमाह। नष्टायतः शिखिशिखाभिहतो यतो वा कार्यंष यत् स्पृशति तत्क्षितितांश्च देशान्। दिव्यप्रभावमिहता न संयथागतस्मान् भुक्तो गतो नरपतिः परभोगिभोगान्॥ इतिवाराहीसंहितायां केतुचारनामाध्याय एकादशः॥ चाय्यते ऽनेनवा। चायुपूजार्दौ। चायः किरितितुः॥

केतुगृहम्। न। मीनराशौ॥

केतुग्रहवल्लभम्। न। वैदूर्यमणौ॥

केतुभः। पुं। मेघे॥

केतुमालम्। न। जम्बुद्वीपस्य नववर्षान्तर्गते खण्डविशेषे॥ सुकेतनं केतुमालं प्रतीच्यां गन्धमादनात्॥

केतुरत्नम्। न। वैदूर्यमणौ॥

केदरः। पुं। दृक्षविशेषे॥ त्रि। टेरके॥

केदारः। पुं। अद्रिविशेषे॥ वदर्याः समीपेक्षेत्रविशेषे॥ यथा। केदाराख्ये महाक्षेत्रे देवी सामार्गदायनीति देवीगीता॥ शिवे॥ भूमिप्रभेदे॥ आलवाले॥ खेत इति प्रसिद्धक्षेत्रे। क्यार इति भाषा॥ कैदारं वारि मधुरं विपाके गुरु दोषलम्। तद्देव वद्गुमुक्तस्तु विशेषाद्दोषदं भवेत्॥ के जले शिरसिवा दारोऽस्य। हलदन्तादित्यलुक्॥ केन जलेन दीर्यते वा। दृविदारणे। कर्मणि घञ्। केदाराद्यञ्चेतिनिर्देशादेत्वम्॥

केदारकटुका। स्त्री। कटुकायाम्॥

कं मालिङ्ग्य सुन्दरीम् । कारये
त् स्थापनं कामी बन्धः केयूरसंज्ञ
क इति ॥ अपिच । स्त्रीणां जङ्घा
महाविष्टो गाढमालिङ्ग्य सुन्दरी
म् । कामये द्विपुलं कामी बन्धः के
यूरसंज्ञक इति ॥

केरलः । पुं । मलेवार इति प्रसिद्धे दे
शवि० ॥ यथा । उग्राः केरलपर्य्याया
इति हेमचन्द्रः ॥ सुब्रह्मण्यं समार
भ्य यावद्देशो जनार्दनः । तावत् के
रलदेशः स्यात् तन्मध्ये सिद्धकेरल
॥ रामेश्वरात् [illegible] दुसकेरल
नामकः । कन्यातीर्थमारभ्य याव
त् स्यात् हव्ययं परे ॥ तावत् सर्वजना
नां तु केरलः परिकीर्त्तितः इति ॥ वेद
भागाधिकारिप्रभुधारि[illegible]वि°
। पुरैते क्षत्रिया आसन् सगरेण पा
र्थिवेनाशिताः वेदाभ्यासं च कृतम् ।
यथा । निःस्वाध्यायवषट्काराः
कृतास्तेन महात्मना । शका यवन
काम्बोजाः पारदाः पह्लवास्तथा ॥
कोलिसर्पा माहिषका दर्वाश्चोलाः
सकेरलाः । सर्वे ते क्षत्रियास्तात धर्म
स्तेषां निराकृतः ॥ इति हरिवंशः
॥ सम्प्रदाय विशेषे ॥ प्रश्नग्रन्थवि
शेषे ॥

केरली । स्त्री । ज्योतिर्ग्रन्थविशेषे ॥

होरायाम् ॥

केलकः । पुं । खड्गधारादिनर्त्तके । प्ल
वके ॥

केलासः । पुं । स्फटिके ॥

केलिः । पुं । स्त्री । परीहासे । [illegible] ।
क्रीडायाम् ॥ केलनम् । किलक्रीडा
याम् । केलृचलने वा । इन् ॥ स्त्री
। पृथिव्याम् ॥

केलिकः । पुं । अशोकवृक्षे ॥

केलिकला । स्त्री । सरस्वत्या वीणायाम् ॥

केलिकालः । पुं । क्रीडासमये ॥

केलिकिलः । पुं । कुष्माण्डकसंज्ञकेशि
वस्यानुचरे ॥ नाट्ये नायकवयस्ये ।
विदूषके । वैहासिके ॥

केलिकिला । स्त्री । कामदेवपत्न्याम्
। रतौ ॥

केलिकिलावती । स्त्री । स्मरभार्या
याम् ॥

केलिकीर्णः । पुं । उष्ट्रे ॥

केलिकुञ्चिका । स्त्री । पत्नीभगिन्याम्
। स्यालिकायाम् । साली इति
भाषा ॥

केलिकोषः । पुं । नटे ॥

केलिनागरः । पुं । बहुभोगिनि । स
म्भोगवति ॥

केलिमुखः । पुं । परीहासे ॥

केलिवृक्षः । पुं । केलिकदम्ब इति[illegible]

उभाषाप्रसिद्धे कदम्बविशेषे ॥

केलिशुषिः । स्त्री । धरित्र्याम् ॥

केलिसचिवः । पुं । क्रीडाविषयकमन्त्रिणि । नर्मदे । नर्मसचिवे ॥

केवर्त्तः । पुं । कैवर्त्तजातौ ॥ इति द्विरू० ॥

केवलः । पुं । कुहने ॥ न । ज्ञानभेदे ॥ शुद्धे ॥ निर्णीते ॥ त्रि । अद्वितीये । एकस्मिन् । असहाये ॥ कृत्स्ने ॥ केवते । केवसेवने । वृषा०कलः ॥ के शिरसि वलयति वा । वलप्राणने । पचाद्यच् ॥

केवलज्ञानी । पुं । भूतार्हद्विशेषे ॥

केवलद्रव्यम् । न । मरिचे ॥

केवलव्यतिरेकि । न । व्यतिरेकमात्रव्याप्तिकानुमाने ॥ यथा । पृथिवी इतरेभ्योभिद्यते गन्धवत्त्वात् यदितरेभ्यो न भिद्यते न तद् गन्धवत् यथा जलम् नचेयं तथा तस्मात् तथेति । अत्र यद्गन्धवत् तदितरभिन्न मित्यन्वयदृष्टान्तो नास्ति पृथिवीमात्रस्य पक्षत्वात् ॥

केवला । स्त्री । एकस्याम् ॥ कृत्स्नायाम् ॥ केवलात् टाप् ॥

केवलान्वयि । न । अन्वयमात्रव्याप्तिकानुमाने ॥ यथा । घटोऽभिधेयः प्रमेयत्वात् पटवत् इत्यत्र प्रमेयत्वा । ऽभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति सर्वस्याप्यभिधेयत्वात् प्रमेयत्वाच्च ॥

केवली । पुं । जैनविशेषे ॥

केवली । स्त्री । ज्ञानविशेषे ॥ ग्रन्थविशेषे ॥ केवलमामकेति संज्ञाछन्दसोर्ङीप् ॥

केविका । स्त्री । केवेर इति कोकणभाषाप्रसिद्धे पुष्पविशेषे । भृङ्गारौ । महागन्धायाम् ॥

केशः । पुं । वरुणे ॥ ह्रीवेरे ॥ दैत्यवि० ॥ विष्णौ ॥ चिकुरे । कुन्तले । बाले ॥ मज्जजातोपधातुविशेषोऽयम् । केशसमूहार्थवाचकाः शब्दाः यथा । पाशाः स्यु स्तत्पराः पाशोरत्नमा भार उच्चयः । हस्तः पक्षः कलापश्च केशभूयस्त्ववाचका इति हेमचन्द्रः ॥ क्लिश्यते । क्लिश बन्धे क्लिशु उपतापे वा । क्लिश्नाति वा । क्लिशू विबाधायाम् । क्लिशेरन् लोलोपश्च ॥ केशेते । शीङ्० । अन्येभ्योपीति डः । हलदन्तादित्यलुक् वा ॥ कस्य शिरसः ईशो वा ॥

केशकः । पुं । केशेषु प्रसिते ॥ स्वाङ्गेभ्यः प्रसिते इति कन् ॥

केशकलापः । पुं । केशपाशे । केशसमूहे ॥

केशकारः । पुं । करिया कुशियार इति भाषा प्रसिद्धे इक्षुभेदे ॥ केशकारी

गुरुः शीतले रक्तपित्तकफापहः ॥

केशघ्नी ८. । पुं । भूर्जायाम् ॥

केशगर्भः । पुं । } कवर्य्याम् ॥
केशगर्भकः । पुं । }

केशघ्नम् । न । इन्द्रलुप्तके ॥

केशटः । पुं । हरौ । विष्णौ ॥ अजे । छागे ॥ उत्कटे ॥ भ्रातरि ॥ शोष शाख्ये अदनस्य वाणे ॥ शोणकवृक्षे ॥

केशधृत् । पुं । भूतकेशे ॥

केशनाम । न । वाले । ह्रीवेरे । वाला इतिभाषा ॥

केशपक्षः । पुं । कचौघे । केशकलापे ॥

केशपर्णी । स्त्री । अपामार्गे ॥

केशपाशः । पुं । केशपक्षे ॥ पाशः पक्ष श्च हस्तश्च कलापार्थाः कचात् परे ॥

केशपाशी । स्त्री । शिखायाम् । शिरोमध्यस्थचूडायाम् ॥ केशानांपाशः । गौरादिः ॥

केशभूः । पुं । शिरसि ॥

केशमथनी । स्त्री । शमीवृक्षे ॥

केशमार्जकम् । न । कङ्कतिकायाम् । कङ्घा कङ्घी इतिभाषा ॥

केशमार्जनम् । न । कङ्कतिकायाम् ॥

केशमुष्टिः । पुं । विषमुष्टिवृक्षे ॥ महानिम्बे ॥

केशरः । पुं । सिंहस्कन्धजटायाम् ॥ तुरङ्गस्कन्धकेशेषु ॥ पुन्नागवृक्षे ॥ ब कुलवृक्षे ॥ न । हिङ्गुनि ॥ पुं । न । किञ्जल्के ॥ के जले शीर्य्यते । शृहिंसायाम् । कृदेरप् । हलदन्तादित्यलुक् ॥

केशरञ्जनः । पुं । भृङ्गराजवृक्षे ॥

केशराजः । पुं । मागमारे । भृङ्गराजे । भंगरा इतिभाषा ॥

केशराम्लः । पुं । मातुलुङ्गकवृक्षे ॥

केशरी । पुं । सिंहे ॥ तुरगे ॥ केशराः स्कन्धवालाः सन्त्यस्य । इनिः ॥ बीजपूरकवृक्षे ॥ पुन्नागे ॥ नागकेसरे ॥

केशरुहा । स्त्री । भद्रदन्तिकावृक्षे ॥

केशरूपा । स्त्री । वन्दाकवृक्षे ॥

केशवः । पुं । पुन्नागवृक्षे ॥ वासुदेवे । विष्णौ ॥ केशौ ब्रह्मरुद्रौ सर्वेश्वरावपि अनुकम्प्यतया वाऽत्येव गच्छतीति व्युत्पत्तिमाश्रित्य निरतिशयैश्वर्यप्रतिपादनात् सर्वेश्वरे ॥ कश्च ईशश्च केशौ पुत्रपौत्रौ स्तोऽस्य । केशाद्व इति वः । केशौवातिवा । वा गतौ । आतइतिकः । शम्भोः पितामहो ब्रह्मपिता शक्रायधीश्वर इति पद्मोक्तः ॥ यद्वा । केशिनं दैत्यविशेषं वाति गच्छति मारणार्थं वातेर्गमनार्थादन्येभ्योपिदृश्यते

इति रः। पृषोदरादित्वात् इकार [illegible]

हतः केशी जनार्दन। तस्मात् केशवनाम्ना त्वं लोके ख्यातो भविष्यसीति हरिवंशे प्रोक्तः॥ यद्वा। केशसंज्ञिताः। सूर्यादिसंक्रान्ता अंशवः तद्वत्तया केशवः। अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः। सर्वज्ञाः केशवं तस्मात् प्राहुर्मां द्विजसत्तमाः॥ इति भारतम्॥ ब्रह्मविष्णुशिवाख्याः शक्तयः केशसंज्ञिताः तद्वत्तया त्रयः केशिन इति श्रुतेः॥ कस्य ब्रह्मण ईशस्य च केशाः ब्रह्मविष्णुरुद्राः ते अस्य वश्यतया सन्तीति केशवः। केशशब्दात् मत्वर्थीयः केशाद्वोन्यतरस्यामिति वप्रत्ययः॥ यद्वा। केशान् ब्रह्मविष्णुरुद्रान् वष्टि इच्छति सर्गादिकार्थायेति। वश कान्तौ। अन्येभ्योपि दृश्यत इति डप्रत्ययः॥ यद्वा। केशान् ब्रह्मविष्णुरुद्रान् वाति गच्छति नियामकत्वेनेति केशवः। वा गतिगन्धनयोः। आतोऽनुपसर्ग इति कः॥ को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम्। आवां तवांशसम्भूतौ तस्मात् केशवनामवान्॥ इति ह० वं॥ त्रि। प्रशस्तकेशवति॥ प्रशस्ताः केशाः सन्त्यस्य। प्रशंसायाम् केशाद्वोन्यतरस्यामिति वः॥ [illegible] स्य। मतुप्॥

केशवर्द्धिनी। स्त्री। सहदेवीलतायाम्॥

केशवायुधः। पुं। आम्रवृक्षे॥ न। विष्णोरस्त्रे॥

केशवालयः। पुं। अश्वत्थवृक्षे॥ विष्णोर्मन्दिरे॥ केशवस्य आलयः॥

केशवावासः। पुं। अश्वत्थद्रुमे॥

केशवेशः। पुं। कबरीम्॥ केशानां वेशः मार्जनाबन्धनादिना कृतशोभाविशेषः॥

केशहन्तृफला। स्त्री। शमीवृक्षे॥

केशहन्त्री। स्त्री। सक्तुफलायाम्। शमीवृक्षे॥

केशहस्तः। पुं। केशसमूहे॥

केशाकेशि। अ। केशेषु केशेषु गृहीत्वा प्रवृत्ते युद्धे॥ तत्रतेनेदमिति सरूपे इति कर्मव्यतिहारे बहुव्रीहिः। अन्येषामपि दृश्यते इति पूर्वपदान्तस्य दीर्घः। इच् कर्मव्यतिहारे इति इच् समासान्तः। तिष्ठद्गुप्रभृतिषु इच्प्रत्ययस्य पाठादव्ययीभावत्वमव्ययत्वञ्च॥

केशान्तः। पुं। गृह्योक्ते संस्कारविशेषे॥ ब्राह्मणादीनां षोडशादिवर्षेषु कर्त्तव्ये गोदानाख्यव्रतविशेषे॥ यथाह

मनुः । केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते । राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः इति ॥

केशाम्बा । स्त्री । सहदेव्याम् ॥

केशार्हा । स्त्री । महासमंगायाम् ॥

केशिकः । त्रि । प्रशस्तकेशविशिष्टे । केशिनि ॥ प्रशस्ताः केशाः सन्त्यस्य । केशादोऽन्यतरस्यामितिपक्षे ठन् ।

केशिका । स्त्री । शतावर्याम् ॥

केशी । पुं । विष्णौ ॥ दैत्यविशेषे ॥ सिंहे ॥ त्रि । केशिके ॥ ठनोऽभावपक्षे इनिः ॥

केशिनिसूदनः । पुं । श्रीकृष्णे ॥

केशिनी । स्त्री । सांखाहूली इति ख्यातायां चोरपुष्प्याम् ॥ रावणमातरि ॥ जटामांस्याम् ॥ प्रशस्तकेशवत्याम् ॥ इनन्तात् ङीप् ॥

केशिसूदनः । पुं । श्रीकृष्णे ॥ केशिनामानमसुरं सूदितवान् सूदयति वा सूदक्षरणे । नं॰ ल्युः ॥

केशिहा । पुं । केशवे । श्रीकृष्णे ॥ केशिनामानमसुरं हन्ति हतवान्वा । हन्॰ क्विप् ॥

केशी । स्त्री । नील्याम् ॥ भूतकेश्याम् ॥ अजलोमा वृक्षे ॥

केशोच्चयः । पुं । केशपाशे ॥

केश्यम् । न । कृष्णागुरुणि ॥ भृङ्गराजे ॥

केसरः । पुं । सिंहस्कन्धजटायाम् । सिंहच्छटायाम् ॥ तुरगस्कन्धकेशेषु ॥ पुन्नागतरौ ॥ बकुलवृक्षे ॥ नागकेसरद्रुमे ॥ न । हिङ्गुनि ॥ नागकेसरपुष्पे ॥ कासीसे ॥ स्वर्णे ॥ पुं । न । किञ्जल्के ॥ रभसस्तु हिङ्गुनि द्वयोरित्याह ॥ केजले सरति । सृगतौ । पचाद्यच् । हलदन्तादित्यलुक् ॥ प्रशस्ताः केसराः अस्य । अर्श आद्यच्वा ॥

केसरवरम् । न । कुङ्कुमे ॥

केसराम्लः । पुं । बीजपूरे ॥

केसरिका । स्त्री । सहदेवीलतायाम् ॥

केसरी । पुं । तुरगे ॥ सिंहे ॥ पुन्नागे ॥ नागकेसरे ॥ रक्तशिग्रौ ॥ बीजपूरे ॥ वानराणां यूथपते विशेषे । हनूमतः पितरि ॥ केसराः स्कन्धवालाः सन्त्यस्य । अतइनिः ॥

केसरिसुतः । पुं । हनूमति ॥ इतिहेमचन्द्रः ॥

कैकयः । पुं । देशविशेषे । ब्रह्मपुत्रात्पामरूपा न्मध्यभागे तु कैकयः ॥

कैकेयः । पुं । अश्वपतिनृपे ॥ केकयस्यापत्यम् । जनपदशब्दात् क्षत्रियादञ् । केकयमित्रयुप्रलयानां यादेरिय इति इयादेशः । वृद्धिः ॥

कैकेयी । स्त्री । भरतमातरि ॥ केक

यस्यापत्यं स्त्री । जनपदशब्दादिवञ्प्रत्ययः । अतश्चेति तद्राजस्याकारस्य लुकातुन । यथाच्यभर्गादियौधेयादिभ्य इति प्रतिषेधात् । पूर्ववतया देरियादेशः । अजन्तत्वान् ङीप् ॥

कैङ्कर्य्यम् । न । किङ्करत्वे । दासत्वे ॥

कैटजः । पुं । कुटजवृक्षे ॥

कैटभः । पुं । दैत्यविशेषे ॥

कैटभजित् । पुं । विष्णौ ॥ कैटभ मसुरविशेष मजैषीत् । जिजये । सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेपिक्विप् इति क्विप् ॥

कैटभहा । पुं । विष्णौ ॥

कैटभा । स्त्री । दुर्गायाम् ॥

कैटभारिः । पुं । विष्णौ ॥

कैटभी । स्त्री । कात्यायन्याम् ॥

कैटभेश्वरी । स्त्री । दुर्गायाम् ॥ तथा चदेवीपुराणम् । कैटभस्तु वशं कृत्वागृहीता तत् पुरीयथा । तेन सा गीयते देवी पुराणे कैटभेश्वरीति ॥

कैटर्य्यः । पुं । कट्फले । पूतिकरञ्जे । कायफल इतिभाषा ॥ मदनवृक्षे ॥ केटनम् । किट्त्रासे । यञ् । केटं राति अतितिकत्वात् । रा० । का तद्दतिकः । वतु० ष्यञ् ॥ निम्बे ॥ महानिम्बे ॥

कैडर्य्यः । पुं । कट्फले ॥ कटभीवृक्षे ॥

कैतकम् । न । केतकीपुष्पे ॥ केवडाभिधेगन्धजले ॥ चि । केतकी सम्बन्धिनि ॥

कैतवम् । न । कपटे ॥ द्यूते ॥ वैदूर्यमणौ ॥ धत्तूरफलपुष्पादौ ॥ खलतायाम् ॥ कितवस्यकर्म्म । यु० अण् ॥

कैदारः । पुं । शालिधान्ये ॥ न । केदारसमूहे ॥ केदारजले ॥ केदारं चेन्न मुद्दिष्टं कैदारं तज्जलं स्मृतम् । कैदारं वातभिष्यन्दि मधुरं गुरुदोषकृत् ॥ केदारादेदम् । अण् ॥

कैदारकम् । न । केदारसमूहे । क्षेत्रे ॥ केदाराणांसमूहः । केदाराद्यञ्चेति वुञ् ॥

कैदारिकम् । न । कैदारके ॥ केदाराणांसमूहः । ठञ् कवचिनश्च । चात्केदारादपि ॥

कैदार्य्यम् । न । क्षेत्रे । कैदारिके ॥ केदाराणां समूहः । केदाराद्यञ्चेति यञ् ॥

कैरवः । पुं । कितवे ॥ रिपौ ॥ न । कुमुदे । शुक्लोत्पले ॥ के जले रौति । रुशब्दे । पचाद्यच् । तत्पुरुषेकृतीत्यलुक् । कैरवस्य प्रसत्त्येऽप्रिय

म् । तस्येदमित्यण् ॥

कैरविणी । स्त्री । कुमुदिन्याम् । कुमुदयुक्तपुष्करिण्यादौ ॥ कैरवाणिसन्त्यस्याम् । पु० इनिः ॥

कैरविणीखण्डम् । न । कैरविणीनां समूहे ॥ कमलादिभ्यःखण्डः ॥

कैरविणीफलम् । न । वेरा इतिप्रसिद्धे कुमुदवीजे ॥

कैरवी । पुं । चन्द्रे ॥

कैरवी । स्त्री । चन्द्रिकायाम् ॥ मेथिकायाम् ॥

कैराटः । पुं ।
कैराटकः । पुं । } स्थावरविषविशेषे ॥

कैरातः । पुं । बलवत्पुरुषे । दैर्घ्यहे ॥ न । शम्बरचन्दने ॥ पुं । न । भूनिम्बे ॥

कैरालम् । न । विडङ्गे ॥

कैराली । स्त्री । विडङ्गायाम् ॥

कैलासः । पुं । शिवकुवेरयोः स्थाने । कुवेराचले । गणपर्वते ॥ केजले लासो लसन मस्य केलासः स्फटिकः । हलदन्तादित्यलुक् । तस्यायम् । कैलासः । अण् ॥ यद्वा । केलीनां समूहः कैलम् । तस्यसमूहइत्यण् । तेनास्यतेऽत्र । आसउपवेशने । हलश्चेतिघञ् ॥ आचाचकादूर्द्धं ॥ कैलासार्थंतदूर्द्धंतु वेधिनीत्यतदूर्द्धंत

इत्युक्तेः ॥

कैलासनिकेतनः । पुं । शिवे । पार्वतीपतौ ॥

कैलासौकाः । पुं । कुवेरे ॥ शिवे ॥

कैवर्त्तः । पुं । धीवर इतिप्रसिद्धे वेश्यागर्भे चत्रियैारसजाते । धीवरे । दासे । जालिके ॥ के जले वर्त्तन्ते । इतु० । पचाद्यच् । कैवर्त्तानां मत्स्यानामयं घातकः । तस्येदमित्यण् ॥

कैवर्त्तमुस्तम् । न । } कैवर्त्तीमुस्तके
कैवर्त्तमुस्तकम् । न । } । कुटन्नटे ॥

कैवर्त्तिका । स्त्री । मालवप्रसिद्धेलताविशेषे । वलरङ्गायाम् । सुरङ्गायाम् । सुभगायाम् ॥

कैवर्त्तिमुस्तकम् । न । कैवर्त्तीमुस्तके ॥

कैवर्त्ती । स्त्री । परिपेलवे ॥ कैवर्त्तभार्यायाम् ॥

कैवर्त्तीमुस्तकम् । न । कुटन्नटे । वानेये । परिपेलवे । मोथा इतिभाषा ॥ इदन्तु वितुन्नकनाम्नो दृक्षस्य मुस्ताकृतिस्त्वगिति भावप्रकाशः ॥ कैवर्त्तानां जातिः कैवर्त्ती । कैवर्त्त्या मुस्तकम् ॥

कैवल्यम् । न । निर्वाणे । अत्यन्तदुःखत्रयप्रशमनलक्षणायाम् मुक्तौ ॥ आत्यन्तिकोहि दुःखत्रयाभावःकैवल्यम् । तच्च पुरुषस्य स्वाभाविका

देवाऽचैगुण्यात् सुखदुःखमोक्षरहि तत्त्वात् सिद्धम् ॥ केवलस्यभावः । ब्राह्मणादित्वात् ष्यञ् ॥

कैशिकम् । न । कैश्ये । केशसमूहे ॥ केशानांसमूहः । अचित्तहस्तिधेनो ष्ठक् ॥ पुं । शृङ्गाररसे ॥

कैशिकी । स्त्री । नाटकवृत्तिविशेषे ॥ यथा । भारती सात्त्वती कैशिक्यारभट्यौ च वृत्तयइति ॥

कैशोरम् । न । किशोरावस्थायाम् । दशवर्षानन्तर मापञ्चदशाब्दपर्यन्तावस्थायाम् ॥ कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि । कैशोर मापञ्चदशादित्युक्तः ॥ किशोरस्यकर्म भावोवा । प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योञ् ॥

कैश्यम् । न । कैशिके । केशवृन्दे ॥ केशानां समूहः । केशाश्वाभ्यांयञ्छावन्यतरस्याम् ॥

कोकः । पुं । चक्रवाके ॥ वृके ॥ ज्येष्ठ्याम् ॥ खर्ज्जूरीवृक्षे ॥ दर्दुरे ॥ विष्णौ ॥ कोकते । वृकआदाने । पचाद्यच् ॥

कोकडः । पुं । विलेशये मृगविशेषे । चमरपुच्छे । लोमशे । धूम्रवर्णके ॥ सम्मांसंश्वासानिलकासहरम् पित्तदाहकरञ्चेतिराजनिर्घण्टः ॥

कोकदेवः । पुं । कपोते ॥

कोकनदम् । न । रक्तकुमुदे ॥ रक्तपङ्कजे ॥ कोकाँश्चक्रान् नदति । णदअव्यक्तेशब्दे । अन्तर्भावितण्यर्थः । मूलविभुजादित्वात् कः ॥

कोकनदच्छविः । पुं । शोणे । ईषद्रक्ते । रक्तोत्पलाभे ॥ त्रि । नदति ॥ कोकनदं रक्तोत्पलम् तद्विव छवि र्यस्य ॥

कोकबन्धुः । पुं । सूर्ये ॥ कोकस्यबन्धुरिव ॥

कोकाशः । पुं । समष्ठिले क्षुपविशेषे ॥

कोकाहः । पुं । श्वेताश्वे । कर्के ॥ काकाह इतिक्वचित्पाठः ॥

कोकिलः । पुं । पिके । वनप्रिये । ताम्राक्षे । मधुगायने ॥ अङ्गारे ॥ इति त्रिकाण्डशेषः । कोकते । वृकआदाने । सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्यइलच् ॥

कोकिला । स्त्री । पिकभार्यायाम् ॥ अजादित्वाट्टाप् ॥

कोकिलाक्षः । पुं । तालमखाना इति प्रसिद्धे वस्तुनि । इक्षुगन्धायाम् ॥ कोकिलोऽक्षियस्य । कोकिलशब्दः कोकिलाक्षसदृशे लाक्षणिकः । अक्ष्णोदर्शनादित्यच् ॥

कोकिलावासः । पुं । आम्रवृक्षे ॥

कोकिलेक्षुः । पुं । कृष्णवर्णेक्षौ ॥

कोकिलेष्टा । स्त्री । महाजम्ब्वाम् ॥

कोकिलोत्सवः । पुं । आम्रवृक्षे ॥

कोङ्कः । पुं । देशविशेषे ॥

कोङ्कणः । पुं । कोकन इतिप्रसिद्धे देशे ॥ अथाभ्यङ्गं समारभ्य कोटिदेशस्य मध्यगे । समुद्रप्रान्तदेशोऽपि कोङ्कणः परिकीर्त्तितः ॥ न । शस्त्रभेदे ॥

कोङ्कणासुतः । पुं । परशुरामे ॥

कोचः । पुं । सङ्करजातिविशेषे ॥ स तु मांसच्छेदिगर्भे तीवरस्यौरसजातः । इतिब्रह्मवैवर्त्तपुराणम् ॥

कोजागरः । पुं । आश्विनपौर्णमास्याम् । भूतपूर्णिमायाम् । कौमुद्याम् ॥

कोठः । पुं । दुर्गे । कुटे । गढ इति भाषा ॥ कुटनम् । कुट० । भावे घञ् ॥

कोटकः । पुं । घरामि राज इति भाषा प्रसिद्धे गृहकारके ॥ स तु कुवकार्यां गर्भे अट्टालिकाकारस्यौरसजातः ॥ इति ब्रह्मवैवर्त्तपुराणम् ॥

कोटरः । पुं । न । वृक्षस्थितगह्वरे । निष्कुहे ॥ कोटं राति । रा० । आत इतिकः ॥

कोटवी । स्त्री । चण्डिकायाम् । दुर्गायाम् ॥ नग्निकाम् । विवसनायांस्त्रियाम् ॥ कोटं याति । या० । आतोनुपेतिकः ॥ गौ० ङीष् ॥

कोटिः । स्त्री । धनुषोऽग्रभागे ॥ अस्त्रादेरग्रभागे ॥ परीक्षकपरिकल्पितनिर्णयनिरूपणीये । प्रावादुकशास्त्रनिर्णयान्ते ॥ उत्कर्षे । प्रकर्षे ॥ दशप्रयुते । शतलक्षसङ्ख्यायाम् । १००००००० ॥ पिड्गशाक इति गौड प्रसिद्ध शाके । पृक्कायाम् ॥ कूटयतेऽनया वा । कूट अप्रदाने । चु० । अच इः ॥ कोटयति कोट्यते वा । कुट कौटिल्ये । इः ॥ कुट्यते वा । इजादिभ्य इतीन् । सर्वधातुभ्य इतीन् वा । वा० गुणः ॥

कोटिकः । पुं । शक्रगोपकीटे ॥

कोटिजित् । पुं । कालिदासे । मेधारुद्रे ॥

कोटिपात्रः । पुं । केनिपातके । अरित्रे इति हेमचन्द्रः ॥

कोटिरः । पुं । नकुले ॥ शक्रे । इन्द्रे ॥ इन्द्रगोपकीटे ॥

कोटिवर्षम् । न । बाणासुरपुरे ॥

कोटिवर्षा । स्त्री । पिड्गशाक इति गौडप्रसिद्ध पृक्कायाम् । आसारक इति भाषा ॥ कोटिभिरग्रैर्वर्षति । मधु । वृष सेचने । अच् ॥

कोटिशः । पुं । लोष्टभेदने । हेंगा इति भाषा ॥ कोटिना अग्रेण श्यति । शो तनूकरणे । सुपीतिकः ॥ कोटिर

स्यात्रीति वा । लोमादित्वात् श: ॥

कोटिश४ । स । कोटाको टौ ॥

कोटीर: । पुं । किरीटे ॥ जटायाम् ॥

कोटीवर्षम् । न । वाणासुरपुरे ॥

कोटीश: । पुं । कोटिशे ॥

कोट्ट: । पुं । पुरस्य दुर्गे । राजधान्याम् ॥ न । दुर्गे । किल्ला गढ इतिभाषा ॥ कुट्टच्छेदनभर्त्सनयो: अच् ॥

कोट्टवी । स्त्री । मुक्तकेश्याम् नग्नायां स्त्रियि ॥ यास्ववासामुक्तकेशी कोट्टवीनम्निकाचसेतिजटाधर: ॥ दुर्गायाम् ॥ वाणासुरमातरि ॥ कुट्टनम् । कुट्ट० । घञ् । वा० गुणाभाव: । कोट्टंवाति । वा०। आत इति क: । गौरादित्वात् ङीष् ॥

कोट्टवीपुरम् । न । वाणासुरपुरे ॥ कोट्ट्या:पुरम् ॥

कोट्टार: । पुं । नागरे ॥ कूपे ॥ पुष्करिण्या: पाटके ॥ कुट्यते । कुट्टच्छेदने प्रतापनेवा । वा० आरन् गुणश्च ॥

कोठ: । पुं । चक्राकारे कुष्ठरोगे । मण्डलके । त्वग्दोषे ॥ अस्यलक्षणम् । असम्यग्वमनोदीर्णपित्तश्लेष्मविनिग्रहै: । मण्डलानि सकण्डूनि रागवन्ति बहूनि च ॥ उत्कोठ: सानुबन्धश्च कोठ इत्यभिधीयतेइति ॥ अन्यच्च । वरटीदष्टनिकाश: कण्डूमान् लोहितोऽस्रकफपित्तात् । क्षणिकोर्त्पादविनाश: कोठ इति निगद्यते तज्ज्ञैरिति ॥ कुठति । कुठिप्रतिघाते । अच् । आगमशास्त्रस्यानित्यत्वान्नुम् ॥

कोठर: । पुं । अङ्कोठवृक्षे ॥

कोठरपुष्पी । स्त्री । वृद्धदारके ॥

कोण: । पुं । वाद्यप्रभेदे ॥ वीणादीनां वादने । येन धनुषाकृतिना वीणादिर्वाद्यते तस्मिन् । नेपालभाषया गजा इति ख्याते वाद्यवादनकाष्ठे । वाजानेकीलकडी इति भाषा ॥ गृहादीनामेकदेशे । कोंना इतिभाषा ॥ अस्रौ । अस्त्रादीनामग्रभागे । पाल्याम् ॥ लगुडे ॥ मङ्गलग्रहे ॥ भौमे ॥ द्वयोर्दिशोर्मध्यभागे । विदिशि ॥ लग्नान्नवमपञ्चमयो: ॥ शनौ ॥ कुण्यते ऽनेन । कुणशब्दोपकरणयो: । हलश्चेति घञ् । कुणत्यनेनवा । कर्त्तर्य्यप् ॥

कोणकुण: । पुं । उत्कुणे । उद्दंशे । उडुस खटमल मङ्कुण इत्यादिभाषाप्रसिद्धे मत्कुणे

कोथ: । पुं । कथे इति गौड भाषा प्रसिद्धे नेत्ररोगविशेषे ॥ त्रि । मथिते ॥ शटिते ॥ यथा । मांसकोथ: मांसगलनमिति ॥

कोदण्डः । पुं । भ्रुवि । भ्रूलतायाम् ॥ न । चापे । धनुषि ॥ पुं । न । नीवृद्विशेषे ॥ कोटति । कुटकौटिल्ये । बा० अण्डन् । पृषोदरादिः ॥ कौतेर्विच् । कोर्दण्डोऽस्यवा ॥

कोद्रवः । पुं । धान्यप्रभेदे । कोरदूषे । कोदो इति भाषा ॥ कोद्रवो वातलो ग्राही हिमःपित्तकफापहः ॥ कौतिशब्दतेवा । कुशब्दे कुङ्शब्दे वा । विच् । द्रवति । द्रुगतौ । अच् । कोश्चासौ द्रवश्च ॥ केन वायुना द्रवतीति वा । पृ० ॥

कोपः । पुं । क्रोधे ॥ अपकारिनिवृत्त्युपायभूतः शास्त्रे । यथा । अपकारिणि चेत् कोपः कोपे कोपः कथं न हि । धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनीति ॥ अपिच । रिपौ बन्धौ स्वदेहे च समैकात्म्यं प्रपश्यतः । विवेकिनः कुतःकोपः स्वदेहावयवेष्विवेति ॥ कोपनम् । कुपक्रोधे । घञ् ॥

कोपनः । त्रि । कोपविशिष्टे । क्रोधिनि ॥ कुप्यति तच्छीलः । क्रुधमण्डार्थेभ्यश्चेतियुच् ॥

कोपनकः । पुं । चोरनामगन्धद्रव्ये ॥

कोपना । स्त्री । कोपवत्यांस्त्रियाम् । भामिन्याम् ॥ कुप्यतितच्छीला । युजन्ताट्टाप् ॥

कोपलता । स्त्री । कर्णस्फोटायांलतायाम् । चित्रपर्ण्याम् । त्रिपुटायाम् ॥

कोपितः । त्रि । क्रोधमापिते । सञ्जातकोपे ॥ ता०इतच् ॥

कोपी । पुं । जलपारावते ॥ त्रि । क्रोधने ॥ अवश्यङ्कुप्यति । कुपक्रोधे । आवश्यकेतिणिनिः ॥

कोपोपायः । पुं । दण्डे ॥ कोपजन्यउपायः ॥

कोमलम् । न । जले ॥ त्रि । अकठिने । मृदौ । मृदुले ॥ मनोज्ञे ॥ काम्यते । कमुकान्तौ । बा० कलच् । अत उत्वम् ॥ कौतिवा । कुशब्दे । वृषा० कलः तस्यमुट् । बा० गुणः ॥

कोमलकम् । न । कोमलार्थे ॥ मृणाले ॥

कोमलवल्कली । स्त्री । लवल्याम् ॥

कोमला । स्त्री । चीरिकायाम् ॥ वृत्त्यनुप्रासघटकवृत्तिभेदे ॥

कोमासिका । स्त्री । जालिकायाम् । फलकीजाली इतिभाषा ॥

कोयष्टिः । पुं । जलकुक्कुभे खगे ॥ कं जलं यष्टिरिवास्य । पृ० ॥

कोयष्टिकः । पुं । कोँडापाखी इतिगौडभाषाप्रसिद्धे टिट्टिभखगे ॥ स्वार्थे कन् ॥

कोरकः । पुं । न । कलिकायाम् । कुड्मले ॥ त्रिकारकोरकाणीतिमाघः

। कोरकोऽस्त्री कुड्मले स्यात् कक्कोलकमृणालयोरिति मेदिनिकरः । कोरकस्तु कुड्मले स्यादिति हेमोऽनेकार्थे । तथाच कलिकाकोरकः पुमानित्यमरस्य प्रमादः । प्रायिकाभिप्रायो वा ॥ कक्कोलके ॥ मृणाले ॥ चोरनामगन्धद्रव्ये ॥ कुर्य्यते । कुर शब्देतारे । कृ०वुन् ॥ यद्वा । कोलति । कुलसंस्त्याने । ण्वुल् । रलयोरैक्यम् ॥

कोरङ्गी । स्त्री । सूक्ष्मैलायाम् ॥ पिप्पल्याम् ॥ कुरति । कुर० । बाहुलकादङ्गच् । गौरादि ङीष् ॥

कोरदूषः । पुं । कोद्रवे ॥ कोरं दूषयति । दुष वैकृत्ये । णिजन्तः । कर्मण्यण् ॥

कोलः । पुं । अङ्कपाल्याम् ॥ शनौ ॥ चित्रे । चीता इतिभाषा ॥ वराहे । शूकरे ॥ उत्सङ्गे । क्रोडे । भुजान्तरे ॥ डौंगा डोंगो इतिच भाषाप्रसिद्धे । प्लवे । भेलके । अल्पनौकायाम् । उडुपे ॥ अस्त्रविशेषे । टङ्कद यमाने ॥ वर्णसङ्करजातिविशेषे । स तु लेटात् तीवरकन्यायां जातः । इति ब्रह्मवैवर्त्तपुराणम् ॥ श्मश्रुधारिणि म्लेच्छजातिविशेषे ॥ स च पूर्वं क्षत्रिय आसीत् सगरेणासौ वेदयागादावनधिकारीकृतः ॥ इति हलायुधः ॥ देशविशेषे ॥ न । चव्ये ॥ मरिचे ॥ तोलकपरिमाणे ॥ बदरे । कोलफले ॥ कोल्याःफलम् । अण् लुकौ । लुक् तद्धितलुकीति ङीषो लुक् ॥ सौवीरा लघु सम्पक्वं मधुरं कोलमुच्यते । कोलन्तु बदरं ग्राहि रुच्यमुष्णञ्च वातहृत् । कफपित्तकरञ्चापि गुरु सारकमीरितम् ॥ कोलति । कुलसंस्त्याने । ज्वलितीतिणः ॥ यद्वा । कोलतिपीनत्वात् । अच् ॥ यद्वा । कोलन्त्यङ्गान्यत्र । हलश्चेतिघञ् ॥

कोलकः । पुं । अङ्कोठवृक्षे ॥ बहुवारवृक्षे ॥ न । काँकला इतिगौडभाषाप्रसिद्धे गन्धद्रव्यविशेषे । कक्कोले ॥ मरिचे ॥ कोलति । कुल० । ण्वुल् । कृशादित्वाद्वुन्वा ॥

कोलकन्दः । पुं । महाकन्दविशेषे । कृमिघ्ने । पुटकन्दे ॥

कोलकर्कटिका । स्त्री । मधुखर्ज्जूरिकायाम् ॥

कोलदलम् । न । नखीनामगन्धद्रव्ये ॥ कोलस्य बदर्या इव दलम् ॥

कोलनासिका । स्त्री । वङ्कुलीवृक्षे ॥

कोलपुच्छः । पुं । कङ्कपक्षिणि ॥

कोलमूलम् । न । पिप्पलीमूले ॥

कोलमकः । पुं । मीखायः काये । तस्नीर्षीने अलाबूदगडककुभसमुद्राये ॥ कोलति । कुल० । बाहुलकादच् । ततः संज्ञायां कन् । खोवृक्ष मध्यः ॥

कोलवल्ली । स्त्री । बशिरे । करिपिप्पल्याम् । कोलद्ववल्ली तत्तुल्यरोमत्वात् ॥

कोलवालुकम् । न । कक्कुष्ठे ॥

कोलशिम्बिः । स्त्री । आलकुशीति गौडभाषाप्रसिद्धे लताविशेषे । शूकरपादिकायाम् । कोलशिम्बिः समीरघ्नीगुर्व्युष्णा कफपित्तकृत् । शुष्कासिसादकृद्वल्या बचिकृद्दुविट् गुरुः ॥

कोला । स्त्री । पिप्पल्याम् ॥ चव्यभेषजे ॥ कोलिद्रुमे ॥ सुरथस्य राजधान्यन्तरे ॥ अस्त्रविशेषे ॥ कोलति । कुल० । ज्वलितीतिगणः । पचाद्यच्‌ । टाप् ॥

कोलाञ्चः । पुं । देशविशेषे ॥

कोलापुरम् । न । दक्षिणदेशप्रसिद्धे लक्ष्मीदेव्याः स्थानविशेषे ॥

कोलाविध्वंसी । पुं । कोलावासिनि ॥ कोलां विध्वंसितुं शीलमस्य । विशब्देन धातोरन्यार्थं करणम् ॥ पर्वतवासिनिम्लेच्छ विशेषे ॥ एवंपालयतकासको च्छाः पर्वतवासिनः ।

कोलाविध्वंसिनः प्रांशाः पृथ्वीग्रहणात्पराइति देवीभागवतोक्तेः । अत्र नामैकदेशेनामग्रहणमितिन्यायात् कोलाशब्दः कोलाहल वाचकः । तथाचकोलाहलेनान्यायेनैव प्रचुराथ्यविध्वंसनशीलाः मतयुद्धमीथ्यव बन्निनद्दृश्यइति भागवत व्याख्यानेनीलकण्ठश्चैवः ॥ यद्वा । कोलां काञ्चित् सुरथस्य राजधानीं विध्वंसितुमुपमर्दितुं शीलमस्य णिनिः ॥

कोलाहलः । पुं । कलकले । बहुविधदूरगाव्यक्तध्वनौ ॥ कुल० । कोलनं कोलः एकीभावः तमाहलति । हलविलेखने । अच् ॥ गिरिवि० ॥

कोलिः । पुं । स्त्री बदर्याम् ॥ कोलति । कुल० । इन् ॥

कोली । स्त्री । बदर्य्याम् । बेर इति प्रसिद्धे वृक्षे ॥ कोलति घनीभवति । कुल० । अच् । गौ० ङीष् ॥

कोविदः । पुं । धीरे । पण्डिते । विदुषि ॥ विवेकिनि ॥ कौति धर्मादि । कुशब्दे । कवते वा । कुङ्शब्दे । विच् । गुणः । कोर्वेदस्य विदो वेत्ता । इगुपधेतिकः ॥ कवि वेदे विदा यस्य वा ॥

कोविदारः । पुं । रक्तकाञ्चनारे । चमरिके । कचनार इति भाषा ॥ को

न । कर्पूरतुल्यगन्धद्रव्यविशेषे । कक्कोले ॥ कोषे फलमस्य ॥

कोषफला । स्त्री । पीतघोषायाम् ॥

कोषवृद्धिः । स्त्री । अर्थोघवृद्धौ ॥ कुरण्डे ॥

कोषशायिका । स्त्री । क्षुरिकायाम् ॥

कोषस्थः । पुं । जलचरजीवविशेषाणाङ्गणे ॥ यथा । शङ्खः शङ्खनकश्चापि शुक्तिशम्बूककर्कटाः । जीवा एवंविधाश्चान्ये कोषस्थाः परिकीर्त्तिता इति ॥ कोषस्थामधुराः स्निग्धाः पित्तवातहरा हिमाः । बृंहणा बहुवर्चस्का वृष्या श्च बलवर्द्धना इति ॥

कोषातकः । पुं । वृचे । केशे ॥ कठे ॥ कोषमतति । अत० । क्कुन् ॥

कोषातकी । स्त्री । श्वेतघोषे । घोषके ॥ ज्योत्स्निकायाम् ॥ पटोल्याम् ॥ कोषमतति । अत० । क्कुन् । गौरादित्वान् ङीष् ॥

कोषाम्रम् । न । केश्रोडा इतिगौड भाषाप्रसिद्धे फलविशेषे ॥ अस्यगुणाः । कफवायुनाशित्वम् अग्निदीपनत्वम् मलवद्धताकारित्वञ्चेति ॥

कोषी । पुं । आम्रवृक्षे ॥

कोषी । स्त्री । पादुकायाम् ॥

कोष्ठः । पुं । कुसूले ॥ गृहमध्ये ॥ कुक्षे सध्ये ॥ यथा । स्थानान्यामाग्नि पक्वानां मूत्रस्य रुधिरस्य च । हृदुण्डुकः पुप्फुसश्च कोष्ठ इत्यभिधीयते इति ॥ त्रि । आत्मीये । निजे ॥ कुष्यते । कुष० । उषिकुषिगार्त्तिभ्यस्थन्निति थन् ॥

कोष्ठाकः । पुं । पर्वतान्तरे ॥

कोष्ठागारम् । न । धान्यादिकोष्ठके । कोठार इतिभाषा ॥

कोष्णम् । न । ईषदुष्णे । मन्दोष्णे ॥ त्रि । तद्वति ॥ ईषदुष्णाद् कोष्णम् । ईषदर्थइतिकादेशः ॥

कोसलः । पुं । सरयूतीरनिविष्टे जनपदविशेषे । अयोध्यानगर्याम् ॥ कुस्यति । कुससंश्लेषणे । दृन्त्याकोनिर्बिबादः । बाहुलकात् कलप्रत्ययोगुणश्च ॥ यद्वा । कौशृङ्खिन्यां सलति गच्छति । सलगतौ । पचाद्यच् । पृषोदरादित्वात् कुशब्दस्यगुणः ॥

कोहलः । पुं । वाद्यप्रभेदे ॥ नाट्यशास्त्रप्रवक्तरिमुनिविशेषे ॥ मद्ये इति हेमचन्द्रः ॥

कौकृत्यम् । न । अनुतापे ॥ अयुक्तकरणे ॥

कौक्कुटिकः । पुं । दाम्भिके ॥ अदूरप्रेरितेचणे । भिक्षौ ॥ कुक्कुटीमायापादपातस्य । तोपश्यति । संज्ञायां ललाटकुक्कुट्यौपश्यतीतिठक् । कु

कुटीशब्देन तत्पातार्थः स्वल्पदेशो लक्ष्यते । सन्न्यासीहि कीटादिवध भीत्या पादविक्षेपपर्य्याप्तदेशपर्यन्त मेव चक्षुः संयम्य गच्छति ॥

कौक्कुटिकन्दलः । पुं । बोडासाँप इति गौडप्रसिद्धे सर्पविशेषे । भाण्डपुष्पे ॥ इतित्रिकाण्डशेषः ॥

कौक्षः । त्रि । कुक्षौ भवे ॥ तत्रभवः इत्यण् ॥

[illegible]यकः । पुं । असौ । खड्गे ॥ कुक्षौ भवः । कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेष्विति ढकञ् ॥

कौङ्कः । पुं ।
कौङ्कणः । पुं । } कोकन इतिप्रसिद्धे कोङ्कणदेशे ॥
कौङ्किणः । पुं ।

कौटः । पुं । कुटजवृक्षे ॥ स्वतन्त्रे ॥

कौटजः । पुं । कुरैया इतिप्रसिद्धे वृक्षे । कुटजे ॥कूटोऽद्रिशृङ्गः सएवकौटः कौटेजायते स्म । सप्तम्यांजनेर्डः । न । कुटजफले ॥ कौटजन्तु लघु स्वादु मृदु ग्राहि च पित्तलम् । ज्वरहृद्रोगपित्तास्रमुदावर्त्तं स्रयूज्जित् ॥ कुटजकुसुमे ॥ तच्छाकप्रकारोयथा । काञ्जिकेन मधुरेण मद्गूर्तं स्वेदितः कुटजपुष्पगुलुच्छः । पाचितः सलवण लिखतैले याति हि क्षुरभीववहिमन्नम् ॥ कौटजं कुसुमं ग्राहि सुस्वादु मृदुशीतलम् । लघु हृद्रोगपित्तास्रगुदावर्त्तज्वरं हरेत् ॥



कौटतक्षः । पुं । स्वकर्मजीविनि स्वाधीने निजालयस्थे तक्षणि ॥ कुट्याम्भवः कौटः स्वतन्त्रः सचासौ तक्षा च । ग्रामकौटाभ्यांतक्ष्ण इतिटच् समासान्तः ॥

कौटल्यः । पुं । वात्स्यायनमुनौ ॥

कौटसाक्षी । पुं । मिथ्यासाक्षिणि ॥

कौटिकः । त्रि । खटीक इतिप्रसिद्धे मांसविक्रयजीविनि । वैतंसिके ॥ कूटेन मृगादिबन्धनयन्त्रेण चरति । चरतीतिठक् ॥

कौटिलिकः । पुं । व्याधे ॥ कर्मारे ॥ कुटिलिकया हरति मृगान् अङ्गारान्वा । अणकुटिलिकायाइत्यण् ॥

कौटिल्यम् । न । अपसरणे ॥ चाणक्यमुनौ ॥ कुटिलतायाम् ॥

कौडविकः । त्रि । कुडवपरिमितव्रीह्यादिवापयोग्ये क्षेत्रे ॥ कुडवस्यवापः । तस्यवापइतिठञ् ॥ पाचविशेषे ॥ कुडवंसम्भवति । सम्भवत्यवहरतिपचतीतिठञ् । कुडवंस्वस्मिन् समावेशयतीत्यर्थः । टिड्ढाणिञीपि कौडविकीब्राह्मणी । कुडवमुपसंहरतिपचति वेत्यर्थः ॥

कौलिकः । पुं । तन्तुवाये ॥ कुलमार्ग प्रवर्त्तके परमिवे ॥ यथा: कौलिक इतिश्रुते ॥ त्रि । कुलमार्गस्थे । ब्रह्मविदि ॥ पाषण्डे ॥ कुलपरम्परायाते ॥ यथा कौलिक धर्मएषः ॥

कौलीनम् । न । गुह्ये ॥ जन्ये । परीवादे । लोकापवादे ॥ अकार्ये । कुकर्मणि ॥ कुलीनत्वे ॥ अहिपशुपक्षिशुनां युधि । प्राणिद्यूते ॥ कुलीनस्य कर्मभावोवा । युवादित्वादण् ॥

कौलीन्यम् । न । कुलीनत्वे ॥

कौलीरा । स्त्री । कर्कटशृङ्ग्याम् ॥

कौलेयः । त्रि । कुलीने ॥ इतिद्विरूपो भरतस्य ॥

कौलेयकः । पुं । कुक्कुरे । शुनि ॥ कुलेभवः । कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेष्विति ढकञ् ॥ त्रि । कुलीने ॥ कुलस्यापत्यम् । अपूर्वपदादन्यतरस्यां यड्ढकञाविति ढकञ् ॥

कौल्माषीणम् । त्रि । कुल्माषोद्भवक्षेत्रे ॥ कुल्माषाणां भवनम् क्षेत्रम् । धान्यानामितिखञ् ॥

कौलः । त्रि । कुलीने ॥ इतिद्विरूपकोषः ॥

कौवलम् । न । कुवले । कोलिफले ॥

कौबेरम् । न । कुष्ठौषधौ ॥ त्रि । कुबेरसम्बन्धिनि तत्कार्येच ॥ कुबेरस्येदमित्यर्थेऽण् ॥

कौबेरी । स्त्री । मातृभेदे ॥ उत्तरदिशि ॥ कुबेरस्येयम् ॥ अणन्तात् ङीप् ॥

कौशम् । न । कान्यकुब्जदेशे ॥

कौशलम् । न । क्रियायां नैपुण्ये । कुशलतायाम् ॥ यथा । कथातिकौशलः शान्तः कथातिकुशलः शुचिः । एकत्र कार्ये व्याख्यातु कावह्नौ कौशलं कवेः ॥ इत्यमरमतकटीका ॥ कुशलस्य कर्मभावो वा । युवाण् ॥

कौशलिका । स्त्री । प्राभृते । उपायने ॥ कुशलप्रश्ने ॥

कौशली । स्त्री । कुशलप्रश्ने ॥ प्राभृते ॥

कौशलेयः । पुं । श्रीरामे । रघूत्तमे ॥

कौशल्यम् । न । कुशलतायाम् ॥ कुशलस्य कर्मभावो वा । ब्राह्मणादित्वात् ष्यञ् ॥ त्रि । कौशल्याभवे ॥

कौशल्या । स्त्री । राममातरि ॥ कुशलैव । स्वार्थे ष्यञ् ॥

कौशल्यायनिः । पुं । कौसल्यायने ॥

कौशल्येयः । पुं । सीतापतौ । श्रीरामे ॥ कौशल्याया अपत्ये ढक् ॥ मनोमयाद्दाम्नरे विमानमये कोषे ॥ कौशल्या सर्वार्थावबोधनसततमर्याबुद्धिस्तस्यामिव: ॥

कौशाम्बी । स्त्री । कुशाम्बनिर्मितायां

नियोगेन प्रकृतिरूपं निपात्यते ॥ कौसल्यादयस्त्वास्वयमध्या अपि-बोध्या: ॥

कौसीद्यम् । न । आलस्ये । तन्द्रायाम् ॥ कुसीदस्य भावे ॥

कौसुमम् । न । कुसुमाञ्जने । पुष्पाञ्जने ॥

कौसुम्भ: । पुं । अरण्यकुसुम्भे ॥ न । शाकविशेषे ॥ यथा । कौसुम्भं कोमलं शाकं कासमर्दविमर्दितम् । पाचितं तप्ततैले सौगिमन्धविमिश्रितम् ॥ कौसुम्भं कासजिच्छर्दं रूक्षमुष्णञ्च पित्तलम् । स्वादु मधुरं पाके लघु रुच्यं सरं हितमिति ॥ त्रि । कुसुमपुष्परागयुक्ते । कसुंभा कसूंभी इति भाषा ॥ कुसुम्भेन रक्तम् । तेन रक्तं रागादित्यण् ॥ तस्येदमित्यण् वा ॥

कौसृतिक: । त्रि । मायाकारे ॥ कुसृत्या चरति । ठक् ॥

कौस्तुभ: । पुं । विष्णोर्मणिप्रभेदे ॥ यथा । आत्मानमस्य जगतो निर्लिप्तमगुणामलम् । बिभर्त्ति कौस्तुभमणिस्वरूपं भगवान् हरिरिति विष्णुपुराणम् ॥ कुत्सितं स्तुभ्नाति व्याप्नोति इति कुस्तुभो ऽब्धि: । तत्र भव: । अण् ॥ कौ स्तोभते इति कुस्तुभो विष्णु: । ष्टुभस्तम्भे । मू० क: । तस्यायमिति वा ॥



कौस्तुभलक्षक: । पुं । विष्णौ ॥

कौस्तुभवक्षा: । पुं । पृश्निगर्भे । विष्णौ ॥

क्रकच: । पुं । ग्रन्थिलाख्यतरौ ॥ पुं । न । करपत्रे । करवत् करौत आरा इति भाषा ॥ योगविशेषे ॥ षष्ठ्यादितिथयो मन्दाद्विलोमं क्रकच: स्मृत: ॥ क्र० इति कचति । कचशब्दे । पचाद्यच् ॥

क्रकचच्छद: । पुं । केतकीवृक्षे ॥ क्रकचसदृशा छदा: यस्य स: ॥

क्रकचपत्र: । पुं । शाकवृक्षे ॥

क्रकचपात् । पुं । } कृकलासे ॥
क्रकचपाद: । पुं । }

क्रकचपृष्ठी । स्त्री । कवयी इति प्रसिद्धे मत्स्ये ॥

क्रकण: । पुं । कयार इति गौडभाषाप्रसिद्धे पक्षिविशेषे । कृकरे ॥ क्र इति कणति । कण० । अच् ॥

क्रकर: । पुं । करीरवृक्षे ॥ क्रकणे ॥ दीने ॥ क्रकचे ॥ क्र इति करोति । अच् ॥ क्र इति शब्दकरणशील: । कृञो हेतुताच्छील्येति ट: ॥

क्रतु: । पुं । यज्ञे । अग्निष्टोमादौ ॥ सोमसाध्ययागे । वृषध्वजे यज्ञे ॥ काम: क्रतु: कर्म जन्म येषामेव

क्रमोभवेत्। तथकामक्रत्वोरभेदमा शङ्क्याह । पुंसो या विषयापेक्षा स काम इति भण्यते ॥ स एव वर्द्धमान: सन् क्रतुत्वं प्रति पद्यते । रुचेरति शय: काम्ये विषये क्रतुरीर्यते इति ॥ सङ्कल्पे ॥ ब्रह्मण: कराज् जातेम रीच्याद्यन्तर्गते मुनिविशेषे ॥ अध्यवसाये । एवमेवनान्यथेत्य विचल प्रत्यये ॥ विश्वदेवविं० ॥ करोति क्रियते वा । कृञ:कतु: ॥ इन्द्रियेषु ॥

क्रतुच्छद: । पुं । वटुभेदे ॥

क्रतुदोषनुत् । पुं । प्राणायामे ॥ क्रतु शब्देनेन्द्रियाणि सङ्कल्पोक्षा तेषांदोषा: । विहिताननुष्ठाननिषिद्धाचरणाकृता: तान् नुदति उपशमयतीति क्रतुदोषनुत् । उक्तंच । दह्यन्तेध्मायमानानां धातूनाञ्च यथा मला: । प्राणायामै स्तथा दोषा शाम्यन्तीन्द्रियगोचराइति ॥

। क्रतुभुक्त् । पुं । असुरे ॥ नास्तिके ॥

क्रतुद्विट् । पुं । असुरे ॥ नास्तिके ॥ क्रतुंद्वेष्टि । द्विष अप्रीतैा । सत्सूद्विषेतिक्विप् ॥

क्रतुध्वंसी । पुं । वृषाङ्के । शिवे ॥ क्रतुं दक्षयज्ञं ध्वंसयति । ध्वंसु० । सुप्यजातावितिणिनि: ॥

क्रतुपशु: । पुं । अश्वे ॥ इतिहारावली ॥

क्रतुपुरुष: । पुं । विष्णैा ॥

क्रतुभुक् । पुं । अमरे । देवे ॥ क्रतुङ्क्रतैा वा भुङ्क्ते । भुजपालनाभ्यवहारयो: । अन्येभ्योऽपिदृश्यते इति क्विप् ॥

क्रतुराज: । पुं । राजसूययज्ञे ॥ क्रतूनांराजा । टच् ॥

क्रतुविक्रयी पुं । क्रतुविक्रायके । मदीययागस्य फलं तव भवत्वित्यभिधायधनग्रहीतरि ॥

क्रतूत्तम: । पुं । राजसूययज्ञे ॥ क्रतुषु उत्तम: ॥

क्रथकैशिका: । पुं । भूम्नि । विदर्भदेशेषु ॥

क्रथनम् । न । मारणे ॥ क्रथहिंसायाम् । भावे ल्युट् ॥ मुक्तागुणविं ॥

क्रथनकम् । न । क्रथनार्थे । स्वार्थेक: ॥

क्रन्दनम् । न । रोदने । शोकादिनाऽश्रुपतने ॥ आह्वाने ॥ क्रदिआह्वानेरोदनेच । भावे ल्युट् ॥ योधसंरावे ॥ पुं । विडाले ॥ इतिशब्दमाला ॥

क्रन्दितम् । न । आह्वाने ॥ रुदिते ॥ युधिचीत्कृतैा ॥ क्रदि० । क्त: ॥

क्रम: । पुं । अनुक्रमे । नियतपूर्वापरभावात्मनि ॥ शक्तैा ॥ विधाने । कल्पे ॥ आक्रमणे ॥ चरणे । अङ्घ्रैा ॥ विततिविशेषे ॥ भिषजांमते चिकित्सायाम् ॥ क्रमणं क्रमेणवा । क्रमु०

घञ्। नोदात्तोपदेशेति न वृद्धिः॥ क्रामतिगच्छति वा। क्रमेः पचाद्यच्॥ पादविक्षेपे॥

क्रमकः। पुं। क्रमज्ञे॥ क्रममधीते वेद वा। क्रमादिभ्योवुन्॥

क्रमणः। पुं। चरणे॥ न। अतिक्रमे॥

क्रमनिग्रहः। पुं। हठनिग्रहादन्यस्मिन्मनसो निग्रहे॥ क्रमनिग्रहेचाऽध्यात्मविद्याप्राप्त्यादयउपायाः। अध्यात्मविद्याच दृश्यमिथ्यात्वं दृश्यस्तुनः स्वप्रकाशत्वञ्चबोधयति। तथाच सति एतन्मनः स्वगोचरेषु दृश्येषु प्रयोजनाभावंप्रयोजनवति दृग्वस्तुनि अगोचरत्वञ्च बुद्धा निरिन्धनाग्निवत् स्वयमेवोपशाम्यति। तथा चश्रुतिः। यथानिरिन्धनो वह्निः स्वयोनावुपशाम्यति। तथा वृत्तिचयाच्चित्तं स्वयोनावुपशाम्यतीति॥ योनिरात्मा॥

क्रमपूरकः। पुं। वकवृक्षे॥

क्रमशः। अ। क्रमेण क्रमेणेत्यर्थे। ढबढवसे इतिभाषा॥

क्रमागतम्। त्रि। क्रमायाते। पितृपितामहादिक्रमेण प्राप्ते॥ यथा। अस्वतन्त्राः स्त्रियः सर्वाः पुत्रदासपरिग्रहाः। अस्वतन्त्र स्तच गृही यत्र तत्स्थान् क्रमागतमिति नारदः॥

क्रमायातः। त्रि। क्रमागते॥

क्रमुः। पुं। गुवाके॥ क्रामति। क्रमु०। बाहुलकादुः॥

क्रमुकः। पुं। भद्रमुस्तके॥ ब्रह्मदारुणि॥ कार्पासिकायाः फले॥ पट्टिकालोध्रे॥ पूगे। गुवाके॥ क्रमति। क्रमु०। बाहुलकादुः। कन्॥

क्रमुकफलम्। न। गुवाके॥

क्रमुकी। स्त्री। गुवाकद्रुमे॥

क्रमेलः। पुं। उष्ट्रे॥

क्रमेलकः। पुं। उष्ट्रे। महाङ्गे॥ क्रामति। क्रमु०। विच्। एलति इलगतौ। एलयति। इलक्षेपे। ण्वुल्। क्रम् चासौ एलकश्च॥

क्रयः। पुं। मूल्येनपरस्माद्द्रव्यग्रहणे। द्रव्यदानेनान्यदीयस्वीकारे॥ यथा। निश्चित्य वस्तुतन्मूल्य मुभयोः सम्मतौ शिवे। परस्पराङ्गीकरणं क्रयसिद्धिस्ततोभवेदिति॥ अपिच। क्रयसिद्धिरदृष्टानां गुणश्रवणतोभवेत्। विपर्यये तद्गुणानामन्यथाभवतिक्रयइतिश्रीमहानिर्वाणतन्त्रम्॥

क्रयलेख्यम्। न। भूम्यादिक्रयविधौ। क्रयाला कवाला इतिभाषा॥ यथा। गृहं क्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम्। पत्रंकारयतेयत्तु क्रयलेख्यं तदुच्यते॥ इतिवृहस्पतिः॥

क्रयविक्रयः । पुं । वाणिज्ये । बणज इति भाषा ॥

क्रयविक्रयानुशयः । पुं । क्रयविक्रययोः पश्चात्तापे । अष्टादशविवादान्तर्गत विवादविशेषे ॥ यथा । क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत् । सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत वेति मनुः ॥

क्रयविक्रयिकः । पुं । वणिजि ॥ क्रयविक्रयाभ्यां जीवति । वस्नक्रयविक्रयाट्ठन् ॥

क्रयविक्रयी । त्रि । क्रयविक्रयकर्त्तरि ॥

क्रयशीर्षम् । न । } कपिशीर्षे । प्राकाराग्रे ॥ इति त्रिकाण्डशेषः ॥
क्रयशीर्षकम् । न । }

क्रयारोहः । पुं । हट्टे । हाट इति भाषा ॥

क्रयिकः । त्रि । क्रायके । क्रेतरि ॥ क्रय जीवातौ । वणिजि ॥ क्रयेण जीवति । वस्नक्रयविक्रयाट्ठन् । क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थम् ॥ यद्वा । क्रीणाति । डुक्रीञ् द्रव्यविनिमये । क्रियइकन् ॥

क्रयी । त्रि । क्रयकर्त्तरि । क्रेतरि ॥ क्रयोऽस्यास्ति । इनिः ॥

क्रय्यम् । त्रि । एकत्रासादितवस्तुनि । क्रेतारो ग्राहकाः क्रीणीयुर्गृह्णीयुरिति बुद्ध्या आपणे प्रसारिते द्रव्ये ॥ क्रीयते । डुक्रीञ्० । अचोयत् । क्रय्यस्तदर्थे इति साधु ॥

क्रव्यम् । न । मांसे ॥

क्रव्यघातनः । पुं । मृगे ॥

क्रव्यात् । पुं । कौणपे । राक्षसे ॥ त्रि । आममांसभोजिनि गृध्रादौ ॥ क्रव्यमाममांसमत्तीति विग्रहे क्रव्येत्ति विट् ॥

क्रव्यादः । पुं । अग्निभेदे । राक्षसे ॥ सिंहे ॥ श्येने ॥ क्रव्यादोऽग्निः शवभक्षक इत्युक्तेः शवभक्षकाग्नौ ॥ त्रि । मांसाशिनि ॥ मांसमत्तीति विग्रहे अदः कर्मण्यण् । पृषोदरादित्वादुपपदस्य क्रव्यादेशः ॥ कृत्तं छिन्नं तदेव पुनर्विशेषतः कृत्तं पक्वं भुङ्क्ते इति क्रव्यादः । कृत्तविकृत्तपक्वशब्दस्य पृ० क्रव्यादेशः इति काशिका ॥

क्रशितः । त्रि । कृशीकृते ॥ कृशशब्दात् तत्करोतीति ण्यन्तात् कर्मणि क्तः । णाविष्ठवद्भावे । र ऋतो हलादेर्लघोरित्यृकारस्य रेफादेशः ॥

क्रशिमा । पुं । कार्श्ये ॥ कृशस्य भावः । पृथ्वादित्वादिमनिच् । र ऋतो हलादेरिति रेफादेशः ॥

क्रशीयान् । त्रि । अत्यन्तकृशतरे ॥ क्षीणे ॥ तनीयसि ॥ अयमनयोरतिशयेन कृशः । द्विवचनविभज्येतीयसु

नि रश्मतश्मिरेफादेशः ॥

क्रान्तः । पुं । अश्वे । चये ॥ क्रामति । क्रमु० । क्तः ॥ त्रि । आक्रान्ते ॥ नि-क्रान्ते ॥ व्याप्ते ॥ सङ्क्रान्ते ॥

क्रान्तदर्शी । त्रि । कवौ । अतीतानागताद्यशेषवस्तुदर्शिनि ॥ क्रान्तमस्माद्दीन्द्रियविषयतामतिक्रान्तं वस्तु सर्वविषयव्यापि यत्र ज्ञानं तथाभूतं द्रष्टुं शीलमस्य ॥

क्रान्ता । स्त्री । बृहत्याम् ॥

क्रान्तिः । स्त्री । आक्रमे ॥ गतौ ॥ खगोलस्थमध्यवर्त्तिसूर्य्यगमनार्थं तिर्य्यग्गोचररेखायाम् ॥ यथा । अयनादयनं यावत् कक्षा तिर्य्यक् तथापरा । क्रान्तिसंज्ञा तया सूर्य्यः सदापर्य्येति भासयन्निति ॥

क्रान्तिवलयः । पुं । क्रान्तिमण्डले । विषुवद्वृत्तात्तुर्विंशतिभागैर्दक्षिणोत्तरे यद्वृत्तं तस्मिन् ॥

क्रान्तुः । पुं । खगे । पक्षिणि ॥ क्रामति । क्रमु० । क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च ॥

क्रामन् । त्रि । पादविक्षिपति ।

क्रायकः । पुं । क्रयिके । क्रेतरि । ग्राहके ॥ क्रीणाति । डुक्रीञ् द्रव्यविनिमये । ण्वुल् ॥ क्रयजीविनि ॥

क्रिमिः । पुं । कृमौ । कीटजातौ । लूताकीटे ॥ लाक्षायाम् ॥ कृमिले ॥ खरे ॥ रोगविशेषे ॥ अस्य निदानम् । यथा । अजीर्णभोजी मधुराम्लनित्यो द्रवप्रियः पिष्टगुडोपभोक्ता । व्यायामवर्जी च दिवाशयानो विरुद्धभोजी लभते क्रिमींश्चेति ॥ क्रामति । क्रमु० । क्रमितमिशतिस्तम्भामत इच्चेतीन् ॥

क्रिमिकण्टकम् । न । कृमिकण्टके ॥

क्रिमिघ्नः । पुं । विडङ्गे ॥ क्रिमीन् हन्ति । हन० । अमनुष्यकर्त्तृकेऽपि चेति टक् । अत्पूर्व्वस्तेतिनियमाभावात्त्वम् ॥

क्रिमिघ्नी । स्त्री । सोमराज्याम् ॥ टित्वात् ङीप् ॥

क्रिमिजम् । न । अगुरुणि ॥

क्रिमिजा । स्त्री । लाक्षायाम् ॥ क्रिमिभ्यो जायते । जनी० । डः ॥

क्रिमिशत्रुः । पुं । पर्य्यासतामाहार इति गौडप्रसिद्धे रक्तपुष्पकेमन्दारे ॥ क्रिमीणां शत्रुः ॥

क्रिमिशापकः । पुं । विट्खदिरे ॥

क्रिमिशैलः । पुं । वल्मीके । नाकौ । वाँवी इति वंवई इति च भाषा ॥

क्रियः । पुं । मेषराशौ ॥

क्रियमाणम् । न । वर्त्तमानदेहनिर्वर्त्त्यकर्म्मणि ॥

क्रिया । स्त्री । उपाये ॥ चेष्टायाम् । इन्द्रियव्यापारे ॥ सा च पाकादिरूपा पाकादिशब्दानां प्रवृत्तौ निमित्तम् । आरम्भे ॥ निष्कृतौ ॥ पूजायाम् ॥ सम्प्रधारणे ॥ कर्मणि ॥ शास्त्रविहितनित्यनैमित्तिकव्याप्यात्मकं कर्मव्यापारात्मिका क्रिया सा च योगपत्नी । यथा । क्रियातु योगपत्नी च पूजिता सर्वसंमता । यया विना जगत्सर्वं विनिष्फलञ्च नारदेति भगवद्वाक्यं देवीभागवते ९ स्कन्धे ॥ शिक्षायाम् ॥ चिकित्सायाम् ॥ करणे ॥ धात्वर्थः करोत्यर्थो वा क्रियेति वैयाकरणाः ॥ आख्याते ॥ गर्भाधानादिसंस्कारे ॥ चतुष्प्रकारव्यवहारपादान्तर्गतव्यवहारपादविशेषः क्रिया । सा द्विधा । मानुषी दैवी च । तत्राद्या साक्ष्यलेख्यानुमानभेदेन त्रिधा । द्वितीया घटाग्न्युदकविषकोषतण्डुलतप्तमाषकफालधर्माधर्मभेदेन नवधा दिव्यपदवाच्या । यथा । द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा । साक्ष्यलेख्यानुमानञ्च मानुषी त्रिविधा स्मृता ॥ घटाद्या धर्मजान्ता च दैविकी नवधा स्मृतेति बृहस्पतिः ॥ भावे ॥ करणञ्च क्रियते वा । अचेति योगविभागात् भावादौ शः यम्



ण्ययः । रिङ्शयग्लिङ्क्षु । अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इतीयङ् ॥

क्रियाकारः । पुं । नवच्छन्दे: नवाभिधायी इति भाषा ॥ क्रियां करोतीति कृ+अण् ॥ क्रियायाः कारो नियमः सङ्केतो वा व्यवस्थापनं वा ॥ त्रि । क्रियाकृति ॥

क्रियाद्वेषी । पुं । साक्ष्यलिखितभुक्तियुक्तिप्रपद्वेष्टरि ॥ स च व्यवहारविषये पञ्चधा जनान्तर्गतहीनविशेषः । यथा । अन्यवादी क्रियाद्वेषी नोपस्थायी निरुत्तरः । आहूतप्रपलायी च हीनः पञ्चविधः स्मृत इति नारदः ॥ त्रि । कर्मद्वेष्टरि ॥

क्रियापादः । पुं । चतुष्पाद्व्यवहारान्तर्गततृतीयपादः ॥ यथा । पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरः स्मृतः । क्रियापादस्तथा चान्यश्चतुर्थो निर्णयः स्मृत इति बृहस्पतिः । तच्च साक्ष्यलिखितभुक्तियुक्तिप्रपथरूपः ॥

क्रियाफलम् । न । कर्मफले ॥ उत्पाद्यादिषु ॥ यथा । उत्पत्तिराप्तिर्विकृतिः संस्कृतिश्च चतुर्विधम् । क्रियाफलं प्राहुरार्याः कौतस्य तस्य सम्भवेदिति ॥

क्रियाभ्युपगमः । पुं । परस्परक्रियास्वीकारे । द्वयोः पुरुषयोः कस्मिंश्चिद्विषये परस्परस्वीकारेणानुमतौ ॥

यथा । क्रियाभ्युपगमात् क्षेत्रबीजा
र्थं यत् प्रदीयते । तस्येह भागिनौ
दृष्टौ बीजी क्षेत्रिक एव चेति मनुः ॥

क्रियायोगः । पुं । देवाराधनतद्दावया
विद्धारबरूपायां पृथक्क्रियायाम् ॥
अथनारदं प्रतिप्रश्नोपाय । मानवयो
गस्तु योगस्य यस्तु साधनमात्मना ।
यस्तु वाह्यार्थ संयोगः क्रियायोगः
स उच्यते ॥ प्रधानं कारणं योगोमु
क्तेर्मुनिवरोत्तम । क्रियायोगस्तु यो
गस्य परमं तातसाधनमिति वह्नि
पुराणम् ॥

क्रियावान् । त्रि । कर्मनिरते । कर्मद्र
यते ॥ क्रियास्यास्ति । तदस्यास्तीति
मतुप् ॥

क्रियावसन्नः । त्रि । साक्ष्यादिनाप्रास
पराजये ॥ यथा । स्वयमभ्युपपन्नोऽपि
स्वचर्यावसितोऽपि सन् । क्रियावस
न्नो वादेतु परं सभ्यावधारणमिति ॥

क्रियावादी । त्रि । प्रमाणवादिनि ॥
कार्यवादिनि । मुकाद्दमर्यादीइति
भाषा ॥

क्रियासमभिहारः । पुं । पौनःपुन्ये ॥
भृशार्थे ॥ क्रियायाः क्रियाविशेषा
णां समभिहारः समुच्चयः ॥

क्रियासाधनम् । न । ज्ञाने ॥ द्रव्ये ॥
ज्ञानद्रव्याभ्यां सम्पन्नस्य कृतः क्रिया
प[illegible] ॥

क्रियेन्द्रियम् । न । कर्मेन्द्रिये ॥ क्रिया
साधकमिन्द्रियम् ॥

क्रीडः । पुं । परीहासे ॥ इतिशब्दर
त्नावली ॥

क्रीडनम् । न । खेलायाम् ॥

क्रीडनकम् । न । क्रीडासाधने । खि
लौना इति भाषा ॥ तेनव्यपेताऽ
खिलचापलेऽर्भके दान्तेऽधृतक्रीड
नकेऽनुवर्त्तिनि । इति भागवत
म् ॥ पुंसिक्लीबेपि यथा । इन्द्रात्मजवि
नोदयान् स्वपानुपसत्ति भूरियम् ।
अर्हानां विजिगीषतिस्म चाणोः क्री
डनकानरा इति ॥

क्रीडा । स्त्री । खेलायाम् । परीहासे ॥
अवज्ञाने । अनादरे ॥ केलिप्रकारे ॥

क्रीडातालः । पुं । तालविशेषे ॥ एक
एवप्लुतो यत्र क्रीडातालः स कथ्यते ।
अपरं नियमं बिनेति दामोदरोक्तेः ॥

क्रीडायानम् । न । क्रीडारथे । पु
ष्परथे ॥

क्रीडारत्नम् । न । रतौ ॥

क्रीडारथः । पुं । क्रीडार्थरथे ॥ अस्यैपुष्प
रथः क्रीडार्थं न समराय यत् ॥

क्रीडोपस्करम् । न । क्रीडासाधने ॥

क्रीतः । त्रि । क्रयकर्मणि ॥ कृतक्रये ।
मूल्यप्रदानेन गृहीते । क्रीतादृ

ति भाषा ॥ दीयमानं न गृह्णाति
क्रीतम् पश्चात्तु यः क्रयी । अथवा
ऽस्य भवेत्क्रोधो विक्रेतुर्योऽप्रयच्छतः
इति नारदः ॥

क्रीतकः । पुं । द्वादशपुत्रान्तर्गतपुत्र
विशेषे ॥ यथा । क्रीणीयात् यस्त्व
पत्यार्थं मातापित्रोर्यमन्तिकात् ।
स क्रीतकः सुतस्तस्य सदृशोऽसदृ
शोऽपि वेति ॥ न । क्रये ॥ विनि
मये ॥

क्रीत्वानुशयः । पुं । द्रव्यं क्रीत्वा पश्चा
दनुतापे ॥ यथा । क्रीत्वा मूल्येन यः
पण्यं केता न बहु मन्यते । क्रीत्वानु
शय इत्येतद्विवादपदमुच्यते इति या
ज्ञवल्क्यः ॥

क्रुञ्च् । पुं । स्त्री । क्रौञ्चपक्षिणि ॥ क्रु
ञ्चति गच्छति । क्रुञ्चकौटिल्याल्पी
भावयोः । ऋत्विगिति साधुः ॥

क्रुञ्चः । पुं । क्रौञ्चखगे ॥ क्रौञ्चगिरौ ॥

क्रुञ्चा । स्त्री । क्रौञ्चविहङ्गमे ॥ अ
जादित्वाट्टाप् ॥ वीणाभेदे इति क
श्चित् ॥

क्रुञ्ची । स्त्री । वीणाप्रभेदे ॥

क्रुद्धः । त्रि । उत्पन्नक्रोधे । क्रोधयुक्ते
॥ क्रुद्धमत्तयोः कृतो विवेकः ॥

क्रुध्यत् । त्रि । सञ्जातक्रोधे ॥

क्रुध् । स्त्री । कोपे ॥ क्रुधकोपे । सं
पदादित्वात्क्विप् ॥

क्रुधा । स्त्री । कोपे । क्रोधे ॥ क्रुध० ।
सं० क्विप् । भानुदिमते टाप् ॥

क्रुम्मा । स्त्री । मृणाले ॥ क्रोमति । क्रु
म० । शीङ् क्रुशोर्धस्यादिनः क्मिच् ॥

क्रुशम् । न । रोदने ॥ रावे ॥ क्रुशमा
ह्वाने रोदने च । भावे क्तः ॥

क्रूरः । त्रि । कठिने ॥ घोरे ॥ नृशंसे ॥
परद्रोहकारिणि ॥ उष्णे ॥ पुं । भू
सात्कुमहद्वे ॥ रक्तकरवीरे ॥ श्येनप
क्षिणि ॥ कङ्कखगे ॥ कृन्तति । कृ
तीच्छेदने । कृतेश्छ क्रू चेति रक् प्र
त्ययो धातोः क्रूआदेशश्च ॥ न । न
क्षत्रविशेषेषु ॥ पूर्वात्रयं याम्यम
घे उग्रंक्रूरं कुजस्तथेत्युक्तेः ॥

क्रूरकर्मा । पुं । कटुतुम्बीवृक्षे । कटुतु
म्ब्याम् ॥ त्रि । भयानककर्मक
र्त्तरि ॥

क्रूरगन्धः । पुं । गन्धके ॥

क्रूरगन्धा । स्त्री । कन्थार्याम् । तीक्ष्ण
कण्टकायाम् ॥

क्रूरदृक् । पुं । शनैश्चरे ॥ त्रि । पिशुने ॥

क्रूरधूर्त्तः । पुं । कृष्णधत्तूरके ॥

क्रूरशकुनः । पुं । श्येने ॥

क्रूररावी । पुं । द्रोणकाके ॥

क्रूरलोचनः । पुं । शनौ । शनैश्चरे ॥

क्रूरसत्वः । पुं । व्याघ्रादौ ॥

क्रूरा । स्त्री । रक्तपुनर्नवायाम् ॥

क्रूराकृतिः । पुं । रावणे ॥ त्रि । भया नका ऽऽकारे ॥ क्रूरा आकृतिर्यस्य ॥

क्रेयिः । पुं । क्रयणे ॥

क्रेतव्यः । त्रि । क्रयार्हे । क्रेयवस्तुनि ॥

क्रेता । त्रि । क्रयकर्त्तरि ॥ यथा । क्रेता तव गुणारामान् विनिमीते भजति वा । मूल्यं हस्तापि नास्तीति स्मारं सन्निधिस्थितः इति ॥ क्रीणाति । डुक्रीञ् द्रव्यविनिमये । तृन् तृच् वा ॥

क्रेयः । त्रि । क्रेतव्यमात्रके । वहे प्रसा रणयोग्ये ॥ क्रीयते । डुक्रीञ् ० । अचोयत् । गुणः ॥ क्रीनने योग्यव स्तु इति भाषा ॥

क्रोडः । पुं । शनौ ॥ उदस्थाने ॥ शूक रे ॥ वाराहीकन्दे ॥ न । स्त्री । अङ्के । भु जान्तरे ॥ रचति ॥ क्रुड्यते । क्रुडवा स्ये । घञ् ॥ क्रुडनम् । क्रुडघनस्ये । घञ्वा ॥ क्रोडो ऽस्यास्ति । अर्श आदिभ्यो ऽच् वा ॥

क्रोडकन्या । स्त्री । वाराहीकन्दे ॥

क्रोड[illegible]ः । पुं । मुस्तके ॥

क्रोडचूडा । स्त्री । महाश्रावणिकावृ क्षे ॥

क्रोड[illegible] । स्त्री । [illegible] ॥

क्रोड[illegible] । पुं । [illegible] ॥

क्रोडा । स्त्री । अश्वानां मुरसि ॥ भु जान्तरे ॥

क्रोडाङ्घ्रिः । पुं । कच्छपे । कमठे ॥

क्रोडी । स्त्री । वाराहीकन्दे ॥

क्रोडीकरणम् । न । आलिङ्गने ॥

क्रोडीकृतः । त्रि । विषयीकृते ॥

क्रोडीकृतिः । स्त्री । आलिङ्गने । संग्र हणे ॥

क्रोडीमुखः । पुं । गण्डके । खड्गे । गैं डा इति भाषा ॥

क्रोडेष्टा । स्त्री । मुस्तायाम् ॥

क्रोथः । पुं । हनने ॥

क्रोधः । पुं । अमर्षे । कोपे ॥ स्वपरापका रस्फूर्त्तिहेतौ अभिज्वलनात्मके ऽन्तः करणवृत्तिविशेषे । परानिष्टाभि लाषे । अनिष्टविषयद्वेषे । चेतोवि कार विशेषे । नेत्ररक्तिमादिहे तौ दोष विशेषे ॥ क्रोधान्धाः किंनकु र्वन्ति ॥ स्वकृत्यं क्रोध एवकथयति । भस्मीकरोमि भुवनं बधिरीकरोमि धीरं सचेतन मचेतनतां नयामि । कृत्यं न पश्यति नचात्महितं शृणो ति धीमानपीति मपि च प्रतिसन्द धातीति ॥ क्रोधवशेन सर्वस्या भवति अधैर्यं भवति हृदयशून्यता च भवतीतिभावः । न मतिरवधा ति [illegible]स्मरतीन्द्रियवर्गः ॥ [illegible] ॥ [illegible]

यक्रोधविजये समर्थो नृतिविवेकिनः ॥ क्रोधकार्यं विभङ्गायेतिशकुनेशास्त्रम् ।

क्रोधनम् । क्रुधकोपे । भावे घञ् ॥ ३८ वत्सरे ॥ विषमस्थं जगत्सर्वं व्याकुलं समुदाहृतम् । जनानां जायते भद्रे क्रोधे क्रोधः परस्परम् ॥

क्रोधजः । पुं । मोहे ॥ क्रोधाद्भवतिसम्मोह इतिस्मृतेः ॥ द्विधाव्यसनाष्टगते व्यसनगणे ॥ यथा । पैशुन्यं साहसं द्रोह ईर्ष्या ऽसूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टक इति ॥ क्रोधाज्जायते । जनी०डः ॥

क्रोधनः । त्रि । कोपिनि । अमर्षणे । क्रोधविशिष्टे ॥ क्रोधशीलः । क्रुध० । क्रुधमण्डेतियुच् ॥ ५९ वत्सरे ॥ रोगोमरणदुर्भिक्षंविरोधोबहुसङ्कुलः । क्रोधेतुविषमंसर्वंसमाख्यातंवरप्रिये ॥

क्रोधना । स्त्री । कोपवत्यांस्त्रियाम् । भामिन्याम् ॥ क्रुध्यतितच्छीला । क्रुध० । युच् । टाप् ॥

क्रोधमूर्च्छितः । पुं । चोरनामगन्धद्रव्ये ॥ त्रि । अतिकोपने ॥

क्रोधरात्रिः । स्त्री । चैत्रायेनवरात्रे ॥ क्रोधरात्रिर्महेशानो चैत्रीयंनवरात्रकमित्यागमात् ॥

क्रोधी । त्रि । क्रोधसंयुक्ते । क्रोधने ॥ महिषे ॥ क्रोधोऽस्यास्ति । इनिः ॥

क्रोशः । पुं । अष्टसहस्रहस्तपरिमाणे । द्व्यष्टसहस्रस्थितये । इतिलीलावती ॥ चतुःसहस्रहस्तपरिमाणे । सहस्रधनुषि । गव्यूतेः कोस इति भाषा । इतिहेमचन्द्रः ॥ मुहूर्त्ते ॥ यथा । दशदण्डेतु या पूजा तत् सर्वमक्षयं भवेत् । षष्ठक्रोशे महेशानि तत् सर्वं मस्तोपमम् ॥ सप्तमक्रोशकेदेवि सर्वं चौरोपमं भवेत् । अष्टमक्रोशके देवि श्वयतुल्यं न संशयः ॥ अतः परं महेशानि विषतुल्यं न संशय इति गुप्तसाधनतन्त्रे ६ पटलः ॥

क्रोशतालः । पुं । ढक्कायाम् ॥

क्रोशध्वनिः । पुं । ढक्कायाम् ॥

क्रोशयुगम् । न । गव्यूतौ । गोरुते । क्रोशद्वये ॥ क्रोशयोर्युगम् ॥

क्रोष्टा । पुं । शृगाले ॥ क्रोशति । क्रुश आह्वाने । सितनिगमीतितुन् । तृज्वत् क्रोष्टुः ॥

क्रोष्टुकपुच्छिका । स्त्री ।<br>
क्रोष्टुकमेखला । स्त्री ।<br>
क्रोष्टुपुच्छी । स्त्री । } पृश्निपर्ण्याम् । गोलोमिकायाम् ॥

क्रोष्टुफलः । पुं । इङ्गुदीवृक्षे ॥

क्रोष्टुविन्ना । स्त्री । पृश्निपर्ण्याम् ॥ क्रोष्टुभिर्विन्ना विचारितेयदृष्टा वेत्तिवा ॥

क्रोष्टेयुः । पुं । श्वेतेचौ ॥

क्रोष्ट्री । स्त्री । शृगालिकायाम् ॥ कृष्णविदार्याम् ॥ लाङ्गल्याम् ॥ शुक्लविदार्याम् ॥ क्रोशति । क्रुशआह्वाने । सितनिगमीतितुन् । स्त्रियाञ्चेति तृज्वत् । ऋन्नेभ्य इतिङीप् ॥

क्रौञ्चः । पुं । कोंचबक इतिगौडभाषाप्रसिद्धे पक्षिणि । क्रुञ्च ॥ ढोंक इतिलोकप्रसिद्धे शरद्विहङ्गे ॥ पर्वतविशेषे ॥ कुररपक्षिणि ॥ अश्वगन्धे ॥ दैत्यविशेषे ॥ दधिमण्डोदसमुद्रेणावृते षोडशलक्षयोजनपरिमिते द्वीपविशेषे । इतिश्रीभागवतम् ॥ क्रौञ्चे क्रौञ्चो हतो दैत्यः क्रौञ्चाद्रौ हेमकन्दरे । स्कन्देन युद्धा सुचिरं चित्रमायी सुमायिना ॥ सर्वेश तस्य दैत्यस्य ख्यात श्चित्रेण कर्मणा । केतुता मगमत् तस्य नाम्ना क्रौञ्चःस उच्यते इतिमृगेन्द्रसंहिता ॥ क्रुञ्चति । क्रुञ्च० । कुञ्चिगादिनाकिम् । प्रज्ञाद्यण् ॥

क्रौञ्चदारणः । पुं । कार्त्तिकेये ॥ दारयति । दृविदारणे । ण्यन्तात्ल्युः । क्रौञ्चस्य गिरिविशेषस्य दारणः ॥

क्रौञ्चनिसूदनः । पुं । क्रौञ्चमर्द्दने । षडानने । कार्त्तिकेये ॥

क्रोष्ट्वा । स्त्री । क्राञ्चसगस्य भार्यायाम् ॥ राक्षस्याम् ॥

क्रौञ्चादनम् । न । घेञ्चुली घेंचु इति गौडभाषाप्रसिद्धे घेञ्चुलिकायाम् ॥ चिञ्चोटके । घेंचकी इतिगौडभाषा ॥ मृणाले ॥ पिप्पल्याम् ॥

क्रौञ्चादनी । स्त्री । पद्मबीजे ॥

क्रौञ्चारण्यम् । न । जनस्थानात् क्रोशत्रयान्तरे दण्डकारण्यपार्श्ववर्त्तिन्यरण्ये ॥

क्रौञ्चारातिः । पुं । कार्त्तिकेये । कुमारे ॥ क्रौञ्चस्य अरातिः ॥ परशुरामे ॥

क्रौर्य्यम् । न । कोपजायामनेर्वृत्तौ ॥ क्रूरत्वे ॥

क्रौशशतिकः । पुं । भिक्षौ ॥ क्रोशशतादभिगमन मर्हति । ततोभिगमनमर्हतीति ठञ् ॥ त्रि । शतक्रोशगमनकर्त्तरि ॥ क्रोशशतङ्गच्छति । क्रोशशतयोजनशतयोरिति ठञ् ॥

क्लमः । पुं । व्यायामे । श्रमे ॥ योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः । क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः ॥ ग्लानौ ॥ क्लमनम् । क्लमुग्लानौ । घञ् । नोदात्तोपदेशस्येतिनवृद्धिः ॥

क्लमथः । पुं । क्लमे ॥ क्लमनम् । क्लमु० । शमादिभ्योथच् ॥

। काढा इति भाषा ॥ क्वथ्यते स्म । कथेनिष्ठाके । क्तः । इट् ॥

**कथिता ।** स्त्री । कढी इतिप्रसिद्धे व्यञ्जने ॥ यथा । स्थाल्यां छृतेवातैले वा हरिद्रां हिङ्गु भर्जयेत् । अवलेहन संयुक्ततक्रंतत्रैवनिः क्षिपेत् ॥ एषा सिद्धा समरिचा कथिता कथिता बुधैः । कथिता पाचनी रुच्या वह्नीवह्निप्रदीपनी ॥ कफानिलविबन्धघ्नीकिञ्चित् पित्तप्रकोपनी ॥ अस्लीकमत्स्याः शुष्कावा किञ्चित् कथितया युताः । रुचिका रोचना रुष्या बल्या वातगदापहाः ॥ कोष्ठशुद्धिकराः शुक्ताः किञ्चित् पित्तप्रकोपनाः । अर्दिते सहनुस्तम्भे विशेषेण हिताः स्मृता इति ॥

**काथः ।** पुं । कथे ॥ कथो वीप्सायाम्ब्यवभावे पाचिको घञ् ॥

**काथः ।** पुं । अतिदुःखे ॥ व्यसने ॥ द्रव्यस्यनिष्पाके ॥ तुर्याशशेषपक्वे ॥ यथा । क्वाथे विचूर्णितं चिन्त्वा तत् षोडशगुण म्पचेत् । पादशेषं प्रकर्त्तव्य मेष काथविधिः स्मृतः ॥ काथ्यमानंतोयं त्रिविधम् । पादावशेषम् । अर्द्धावशेषम् । त्रिपादावशेषञ्च । अनाम पारिभाषिकमुष्णोदकम् । तत्र पादावशेषंकफनाशकं लघु अग्निवर्द्धकञ्च । अर्द्धावशेषं पित्तनाशकम् । त्रिपादावशेषं वातनाशकम् । तेषां मध्ये त्रिपादावशेषं जलं हेमन्ते शिशिरेचप्रशस्तम् । वसन्ते पादावशेषम् । शरद्ग्रीष्मेचार्द्धावशेषम् । वर्षायामष्टभागावशेषं जलं प्रशस्तम् ॥ दिनपक्वं जलं रात्रौगुरु रात्रिपक्वंजलं दिवागुरु भवतीति विवेकः ॥

**काथोद्भवम् ।** न । कर्पर्य्याम् । कृत्रिमरसाञ्जने ॥

**चः ।** पुं । संवर्त्ते ॥ राक्षसे ॥ नरसिंहे ॥ विद्युति ॥ क्षेत्रे ॥ नाशे ॥ क्षेत्रपाले ॥ एकपञ्चाशन्मातृकावर्णानामन्तिमेवर्णे ॥ अयञ्चककारषकारसंयोगजन्यत्वेन पृथग्वर्णत्वं केचिन्नमन्यन्ते । तेषां मते तन्त्रोक्तकपञ्चाशद्वर्णाऽनुपपत्तिरागमोक्तदीक्षाक्षकारस्य मेरुत्वेन कथनाऽनुपपत्तिश्च । तस्मात् क्षकारस्य पृथग्वर्णत्वं मन्तव्यम् । यथोक्तमागमे । अकारादिलकारान्ता वर्णाः पञ्चाशदीरिताः । संयोगात् कषयोरेष क्षकारो मेरुरीरितइति ॥ तथापिमेदिनीहेमचन्द्राद्विकोषानुरोधात् कषसंयोगजत्वेन कादिवर्णमध्येलिखितः ॥

क्षणः। पुं। पर्व्वणि॥ उत्सवे॥ यथा। क्षणेरस्याः कुशस्त्रियदिति॥ व्यापारे॥ व्यापारविकलत्वे। निर्व्यापारस्थितौ॥ अवसरे॥ परतन्त्रतायाम्॥ मध्ये॥ अनेहसोमानविशेषे। त्रिंशत्कलापरिमितेकाले। दशपलपरिमिते॥ लवद्वये॥ निमेषक्रियावच्छिन्नस्यकालस्य चतुर्थभागे॥ यथा। आयुषःक्षणएकोपिनलभ्यःस्वर्णकोटिभिः। सचेत् तुविफलोयाति कानो हानिस्ततोऽधिकेति॥ क्षणोतिदुःखम्। क्षणुहिंसायाम्। अच्॥

क्षणक्षेपः। पुं। क्षणविलम्बे॥

क्षणदः। पुं। गणके॥ न। जले॥ क्षणं ददाति। डुदाञ्। आत इति कः॥

क्षणदा। स्त्री। निशि। रात्रौ॥ क्षणमुत्सवं निर्व्यापारस्थितिं वा ददाति। कः। टाप्॥ हरिद्रायाम्॥

क्षणनम्। न। वधे॥ क्षणोतेर्भावे ल्युट्। त्यागे। दाने॥

क्षणनिःश्वासः। पुं। शिशुमारे॥ क्षणे निःश्वासोऽस्य॥

क्षणप्रभा। स्त्री। विद्युति॥ क्षणं प्रभायस्याः॥

क्षणभङ्गः। पुं। क्षणनाशे॥

क्षणभङ्गुरः। त्रि। क्षणैकनाश्ये॥ दृष्टनष्टे॥

क्षणिकः। त्रि। अनित्ये॥ क्षणमात्रस्थायिनि॥

क्षणिकत्वम्। न। तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वे॥ यथा। आकाशे शब्दस्य प्रथमक्षणेउत्पत्तिः द्वितीयक्षणे स्थितिः तृतीयक्षणे विनाशः॥

क्षणिका। स्त्री। तडिति। विद्युति॥

क्षणिनी। स्त्री। निशि॥

क्षतम्। न। ईर्म्मे। व्रणे। स्रवद्रक्तपूयादौ। घाव इतिभाषा॥ क्षणनम्। क्षणु०। नपुंसके भावे क्तः। अनुदात्तोपदेशस्येत्यादिना नलोपः॥ खण्डिते॥ षष्ठगृहे॥ नष्टे॥

क्षतकासः। पुं। पञ्चविधकासरोगान्तर्गतकासरोगविशेषे॥

क्षतघ्नः। पुं। कुकुरोंधा इतिप्रसिद्धे क्षुपविशेषे॥ क्षतं हन्ति। हन०। हन्तेरमनुष्येत्यादिना टक्॥

क्षतघ्नी। स्त्री। द्रुमामये। लाक्षायाम्॥ टित्त्वात् ङीप्॥

क्षतजम्। न। रक्ते। रुधिरे॥ पूये॥ क्षताज्जातम्। जनी०। पञ्चम्यामिति डः॥

क्षततृष्णा। स्त्री। शस्त्रादिक्षतयुक्तस्य पिपासायाम्॥

क्षतविध्वंसी। पुं। वृन्दारकवृक्षे॥

ण्याः सूर्यचन्द्रवंशजा राजानः । तेषां कलेः सहस्रवर्षपर्यन्तमासन् । ततो महानन्दिसुतो नन्दः शूद्रायां सुतः सः शतवर्षपर्यन्तं राज्यं चकार । तदन्ते चाणक्यनामा ब्राह्मणो नन्दं तत्पुत्रांश्च हत्वा मुरवंशजं चन्द्रगुप्तं राजानं कृतवान् । कलौ नन्दान्तः क्षत्रियवंशः । इति श्रीभागवते १२ स्कन्धे १ ऽध्यायात् संगृहीतम् ॥

क्षत्रिया । स्त्री । क्षत्रियाण्याम् ॥ अर्य्यक्षत्रियाभ्यां वा स्वार्थे इत्यानुगागमाभावपक्षे ॥ क्षत्रियजातौ ॥ योपधत्वान्न ङीष् ॥

क्षत्रियाणी । स्त्री । क्षत्रियजातीयायाम् ॥ अर्य्यक्षत्रियाभ्यामिति पाक्षिक आनुगागमो ङीष् च ॥

क्षत्रियी । स्त्री । क्षत्रिययोषायाम् ॥ क्षत्रियस्य स्त्रीत्यर्थे पुंयोगादाख्यायामिति ङीष् ॥

क्षन्तव्यः । त्रि । क्षमणीये ॥

क्षन्ता । त्रि । क्षमायुक्ते । सहिष्णौ ॥ क्षमते । क्षमूष० । तच्छीलः । तृन् ॥

क्षपणः । त्रि । निर्लज्जे ॥ इति त्रिकाण्डशेषः ॥

क्षपणकः । पुं । बुद्धभेदे । दिगम्बरसिद्धान्ते ॥ सन्न्यासिनि ॥ यथा । एकः क्षपणक आकाशस्तौ तत्र क्षपणक द्वय आकाशा । यत्र क्षपणक द्वय आकाशा तत्र क्षपणक का आकाशा ॥ इत्युद्भटः ॥

क्षपण्युः । पुं । अपराधे ॥

क्षपयिता । त्रि । नाशयितरि ॥ क्षपयति । क्षे० । तृच् ॥

क्षपा । स्त्री । निशि । रात्रौ ॥ क्षपयति चेष्टाम् । क्षै क्षये । अन्तर्भूतण्यर्थात् पचाद्यच् ॥ हरिद्रायाम् ॥

क्षपाकरः । पुं । चन्द्रे । नवमेघे ॥ क्षपां करोति । कृञोहेतुताच्छील्यानुलोम्येषु इति टः ॥ कर्पूरे ॥

क्षपाचरः । पुं । राक्षसे ॥

क्षपाटः । पुं । राक्षसे ॥ क्षपायामटति । अट० । पचाद्यच् ॥

क्षपितः । त्रि । दूरीकृते ॥ नाशिते ॥ विस्मृते ॥

क्षमम् । न । युक्ते ॥ त्रि । शक्ते ॥ हिते ॥ क्षमावति ॥ पुं । धूसरे ऽतिह्रस्वचटके । धान्यभक्षणे ॥ क्षमते क्षम्यते वा । क्षमूषसहने । पचाद्यच् । घञ्वा । नोदात्तोपदेशस्येति न वृद्धिः ॥

क्षमणीयः । त्रि । क्षन्तव्ये ॥ क्षमेरनीयर् ॥

क्षमता । स्त्री । योग्यतायाम् । सामर्थ्ये ॥ अर्थप्रकाशनसामर्थ्ये ॥ यथा

। वर्हिर्दैवसदनं दामीत्यत्र दामीति पदस्य छेदनप्रकाशनसामर्थ्यात् वर्हिरित्यस्य चास्तृतदर्भप्रकाशनसामर्थ्यात् आस्तृतदर्भच्छेदने समुदायसम्बन्धिनियोगोऽवगम्यते ॥ इति धर्म्मदीपिका ॥

क्षमा । स्त्री । भूमौ ॥ तितिक्षायाम् । शान्तौ । सत्यपि सामर्थ्ये परिभवहेतुं प्रति क्रोधस्यानुत्पत्तौ आक्रुष्टस्य ताडितस्य वा निर्विकारचित्ततायाम् । हर्षविषादयोरविकृतचित्ततायाम् ॥ तल्लक्षणं यथा । वाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित् । न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तितेति ॥ अपि च । आक्रुष्टोऽभिहतो यस्तु नाक्रोशेन्न हनेदपि । अदुष्टैर्वाङ्मनःकायैः तितिक्षुः स क्षमा स्मृतेति ॥ क्रोधं जेतुं क्षमामेव मन्यन्ते खलु साधवः । यथाहुस्ता । क्रोधान्धकारविकटभ्रुकुटीतरङ्गभीमस्य सान्ध्यकिरणारुणघोरदृष्टेः । निष्कम्पनिर्म्मलगभीरपयोधिधीरा धीराः परस्य परिवादगिरः क्षमन्ते ॥ क्रमेण वाचां गिरसो मयूखैर्न चित्ततापो न तनोर्विमर्दः । न चापि हिंसादिरनर्थयोगः श्लाघ्या परं क्रोधजयेऽक्षमेकेति ॥ क्रोधजयो यथा मप्याह । क्रुद्धे स्मेरमुखावधीरणमयाविष्टे प्रसादक्रमो व्याक्रोशे कुशलोक्तिरात्मदुरितच्छेदात् सबन्धावने । धिगक्लोरजितात्मनोऽक्षमवती दैवादुपेता क्षितिं दुर्व्वारेति दयारसार्द्रमनसां क्रोधस्य कुत्रोदय इति ॥ स्वधर्म्मविस्तामपहाय योऽयं मत्पापमूर्त्तिभिषजा कृतः । नचेत् क्षमामप्यक्षमः कुर्य्यान्मन्त्रं कृतघ्नोवदन्यो द्वयोन्यः । इतिच ॥ क्षमते । अच् । क्षमेष्टाप् ॥ क्षमणम् । षिद्भिदादिभ्योऽङ् वा ॥ खदिरे ॥

क्षमादंशः । पुं । शिग्रौ ॥

क्षमावान् । त्रि । क्षान्तियुक्ते ॥ यथा । एकः क्षमावतां दोषो द्वितीयो नोपपद्यते । यदेनं क्षमया युक्तमशक्तं मन्यते जन इति गारुडे ११४ अध्यायः ।

क्षमिता । त्रि । क्षमाशीले ॥ क्षमणशीलः । क्षमूष् + तृन् । स्वरतीति वेट् ॥

क्षमी । त्रि । क्षमितरि । तितिक्षौ । सहिष्णौ ॥ क्षमते तच्छीलः । क्षमूष् + शमित्यष्टाभ्यो घिनुण् । नोदात्तोपदेशस्येति वृद्धिप्रतिषेधः ॥ खेसरे । अश्वतरे । खच्चर इति भाषा ॥

क्षयः। पुं। कासरोगविशेषे। 'यक्ष्मणि। शोषे॥ क्षयति देहम्। क्षि क्षये। क्षिनिवासगत्योर्वा। अन्तर्भावितण्यर्थात् क्षि-अच्। क्रियाक्षयकरत्वात्तु क्षय इत्युच्यते बुधैः॥ अस्यौषधम्। यथा। श्वेतकोकिलाक्षमूलं छागीक्षीरेण संयुतम्। त्रिसप्ताहेन वै पीतं क्षयरोगं क्षयं नयेत्। रोगकाण्डे॥ वेश्मनि। निवासे॥ संवर्त्ते। कल्पान्ते॥ क्षीयन्ते प्राणिनोऽत्र॥ अपचये। हानौ॥ क्षयणम् क्षयः॥ नीतिवेदिनां त्रिवर्गान्तर्गते प्रक्षमवर्गे॥ स्वराष्ट्रमात्रवर्गस्यापचय॥ यथा। क्षयः स्थानञ्च वृद्धिश्च त्रिवर्गो नीतिवेदिनामित्यमरः॥ ध्वंसे। शरीरसामर्थ्यस्य धनस्य सेनायाश्च नाशे॥ पश्चिमोत्तरद्वारगृहे॥ विरामे॥ हिंसायाम्॥ क्षीष् हिंसायाम्। एरच्॥ धातुक्षयहेतौ॥ क्षीयतेऽनेनेति व्यु० पुंसि संज्ञायामिति घः॥ ६० वत्सरे॥ मेदिनी क्षयते देवि सर्वभूतं चराचरम्। देशभङ्गश्च दुर्भिक्षं क्षये संक्षीयते प्रजाः॥ सौराष्ट्रमालवे देशे दक्षिणे कोङ्कणे तथा। दुर्भिक्षं जायते घोरं क्षये संवत्सरे प्रिये॥ कौमुदीचर्मण्वत्योश्च यमुनानर्मदातटे। विन्ध्यायां सैन्धवे चापि विन्ध्यान्ते न संशयः॥ सिंहलं मध्यदेशश्च काश्मीरं तथैव च। क्षये क्षयन्ति सर्वाणि मान्यथा [illegible]॥

क्षयतरुः। पुं। वेलियापीपर इति प्रसिद्धे नन्दीवृक्षे। स्थालीवृक्षे॥

क्षयथुः। पुं। कासे॥

क्षयनाशिनी। स्त्री। जीवन्तीवृक्षे॥

क्षयपक्षः। पुं। कृष्णपक्षे॥

क्षयमासः। पुं। रविसङ्क्रान्तिद्वयसहित मासे॥ यथा। द्विसङ्क्रान्तिमासः क्षयाख्यो मासः स च कदाचिदेव भवति। क्षयः कार्त्तिकादित्रये नान्यतः स्यात् तदा वर्षमध्येऽधिमासद्वयं स्यादिति॥ अपि चाह कालिदासः। सौरा यदा चान्द्रमसो गरीयान् मासो द्विसङ्क्रान्तिरसौ क्षयाख्यः। स यस्तदा स्यात् क्षितिवेदरूपे १४१ रब्दे मिते क्वचिद् भूचन्द्रैरिति॥

क्षयितः। त्रि। नाशिते॥

क्षयी। त्रि। नाशिनी॥ क्षयशीलः। जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्चेति इनिः॥ राजयक्ष्मान्विते॥ क्षयोऽस्यास्ति। अत इनि ठनाविति इनिः॥

क्षय्यः। त्रि। क्षेतुं शक्ये॥ क्षि०। शक्ये यत्। क्षय्यजय्यौ शक्यार्थे॥

क्षरः। पुं। मेघे॥ विनाशिनि कार्य्ये॥

षो ॥ यथः । कार्यकारणस्वरूपन्तु न श्वरं क्षरमुच्यते । क्षरादिकद्वधर्मत्वा दक्षरं ब्रह्म भण्यते इति ॥ क्षरः सर्वाणि भूतानि कूटस्थोऽक्षरउच्य त इतिच ॥ न । नीरे । जले ॥ क्षर ति । क्षरसञ्चलने । पचाद्यच्

क्षरणम् । न । च्युतौ । चूवना इति भाषा ॥

क्षरितः । त्रि । च्युते । चूवा गिरा इतिच भाषा ॥

क्षरी । पुं । वर्षाकाले ॥ त्रि । क्षरण विशिष्टे ॥

क्षवः । पुं । क्षुते । छिक्कायाम् । छींक इतिभाषा ॥ राजिकायाम् ॥ राजि काप्रभेदे ॥ क्षौति । टुक्षुशब्दे । ण्यर्थः । पचाद्यच् ॥ क्षवणम् । क्ष दोरप् वा ॥

क्षवकः । पुं । राजिकायाम् ॥ अपामार्गे ॥ भूतांकुशे ॥

क्षवकृत् । स्त्री । छिक्कन्याम् ॥ क्षवङ् करोति । कृञः क्विप् ॥

क्षवथुः । पुं । क्षुते ॥ कासे ॥ क्षौत्य नेन । टुक्षु० । ट्वितोऽथुच् ॥

क्षवपत्रा । स्त्री । द्रोणपुष्प्याम् ॥ क्षवः पत्रेषुयस्याः ॥

क्षविका । स्त्री । दन्तीप्रभेदे । पीत दुग्धायाम् । पुत्रप्रदायाम् । बहु फलायाम् ॥

क्षात्रम् । त्रि । क्षत्रियसम्बन्धिनि ॥

क्षात्रकर्म्म । न । क्षत्रियजातेः कर्म्मणि ॥ यथा । शौर्यं तेजो धृतिर्दाक्ष्यं युद्धेचाप्यपलायनम् । दानमीश्वरभा वश्चक्षात्रं कर्मस्वभावजमिति ॥ क्षा त्रञ्चतत् कर्मचेतिविग्रहः ॥

क्षान्तः । त्रि । सहिष्णौ । सोढे ॥ केन चित् पीडितोपि यः समर्थः संस्तत् पीडापराङ्मुख स्तस्मिन्नित्यर्थः ॥ क्षम्यते स्म । क्षमूष० । क्तः । अनु नासिकस्येतिदीर्घः ॥

क्षान्तिः । स्त्री । क्षमायाम् । तितिक्षा याम् । क्रोधप्राप्तौ चित्तसंयमने । स त्यपिसामर्थ्ये अपकारिण्यपकाराचि कीर्षायाम् ॥ यथा । क्षमायाम् ज संवक्षे त्समसो भास्करोदयः । क्षा न्तिःकाले रघौघस्तुनामसङ्कीर्त्तनंच रेरिति ॥ क्षमणम् । क्षमूसहने । दि वादिः । अस्याषित्त्वात् क्तिन् । अनु नासिकस्येतिदीर्घः ॥ तुक्षमामेपि परुषं नोत्तरं प्रतिपद्यते ॥

क्षान्तुः । त्रि । क्षमाशीले । मर्षके ॥ क्षाम्यति । क्षमू० । क्रमिगमिक्षमि भ्यस्तुन् वृद्धिश्च ॥

क्षामः । त्रि । क्षीणे ॥ अबले ॥ क्षैक्षये । गत्यर्थाकर्मकेत्यादिना क्तः ।

क्षारद्वयम् । न । सर्जिकायावशूकयोः ॥ क्षारयोर्द्वयम् ॥

क्षारपत्रः । पुं । } वास्तूकशाके ॥
क्षारपत्रकः । पुं । }

क्षारभूमिः । पुं । समुद्रोपान्तदेशे ॥ यथा । जीवनं जीवनं हन्ति प्राणान् हन्ति समीरणः । किमाश्चर्यं क्षारभूमौ प्राणदा यमदूतिका ॥ स्त्री । लवणभूमौ ॥

क्षारमध्यः । पुं । अपामार्गे ॥

क्षारमृत्तिका । स्त्री । ऊषे ॥ क्षाराचासौ मृत्तिकाच ॥

क्षारमेलकः । पुं । क्षारसङ्घे ॥

क्षारवृक्षः । पुं । मुष्कके ॥

क्षारश्रेष्ठः । पुं । पलाशे । किंशुके ॥ मुष्ककवृक्षे ॥ न । वज्रक्षारे ॥

क्षारषट्कम् । न । षड्विधक्षारे ॥ यथा । धवापामार्गकुटजपालाशतिलमुष्ककैः । क्षारैरेतैस्तुमिलितैः क्षारषट्कमुदाहृतम् ॥

क्षारसिन्धुः । पुं । लवणसमुद्रे ॥ सतु जम्बुद्वीपस्यदक्षिणे प्लक्षद्वीपस्योत्तरेवर्त्तते ॥

क्षाराच्छम् । न । सामुद्रलवणे ॥

क्षाराब्धिः । पुं । क्षारसिन्धौ ॥

क्षाराष्टकम् । न । अष्टप्रकारक्षारे ॥ यथा । पलाशवज्जिशिखरिचिञ्चार्कतिलनालजाः । यवजः सर्जिका चेति क्षाराष्टकमुदाहृतम् ॥ क्षारा एतेऽग्निनातुल्याःशूलगुल्महराभृशमिति ॥ क्षाराणामष्टकम् ॥

क्षारिका । स्त्री । भोगपिपासिकायाम् । क्षुधायाम् ॥

क्षारितः । त्रि । स्राविते ॥ क्षारे ॥ अभिशस्ते । अपवादग्रस्ते । प्राप्तदोषे ॥ क्षार्य्यते स्म । क्षर० । णयन्तः । क्तः ॥

क्षारोदः । पुं । लवणोदे ॥ क्षारमुदकं यस्मिन् । उत्तरपदस्यचेत्युदकस्योदादेशः ॥

क्षालनम् । न । निर्णेजने । प्रक्षालने ॥

क्षालितम् । त्रि । धौते । निर्णिक्ते । कृत प्रक्षालने ॥

क्षिः । पुं । निवासे ॥ गतौ ॥ क्षये ॥

क्षितः । त्रि । हिंसिते ॥ क्षिधातोः कर्मणि क्तः ॥

क्षितिः । स्त्री । निवासे ॥ मेदिन्याम् ॥ महाक्षयेऽक्षयं यातिक्षितिस्तेन प्रकीर्त्तिता ॥ क्षये ॥ रोचनाख्यगन्धद्रव्ये ॥ क्षियति । क्षिनिवासगत्योः । क्षिच्चेतिक्तिच् ॥ क्षणम् क्षीयतेऽस्यांवा । क्षिक्षये । क्षिनिवासगत्योः । स्त्रियांक्तिन् ॥ कालभेदे । प्रलयकाले ॥

क्षितिकणः । पुं । } धूलौ । रजसि ॥
क्षितकणा । स्त्री । }

क्षितिक्षमः । पुं । खदिरद्रुमे ॥

क्षितिक्षित् । पुं । क्षितीशे ॥ क्षितिक्षियति । क्षि० तुदादिः । क्विपि तुक् । क्षितिपतिष्वेवाषौ क्षितिक्षिदितिभट्टमल्लः ॥

क्षितिजः । पुं । उपरसविशेषे । भूनागे ॥ मङ्गलग्रहे ॥ वृत्ते । मङ्गीवहे ॥ क्षितेर्जातः । जनी० । डः ॥ न । खगोले आकाशमध्यान्नवर्त्तंशान्तरे तिर्य्यग्वृत्ते ॥ त्रि । भूमिजाते ॥

क्षितिजन्तुः । पुं । भूनागे ॥ क्षितेर्जन्तुरिव ॥

क्षितिधरः । पुं । पर्वते ॥ कूर्मवासुकिदिग्गजेषु च ॥

क्षितिनागः । पुं । उपरसविशेषे । भूनागे ॥

क्षितिनाथः । पुं । राजनि ॥

क्षितिपः । पुं । भूपतौ ॥

क्षितिपतिः । पुं । न्रपे । भूपे ॥

क्षितिपालः । पुं । भूपाले । राज्ञि ॥

क्षितिपालभाक् । पुं । राजनि ॥

क्षितिपुत्रः । पुं । नरकराजे । नरकासुरे ॥

क्षितिरन्ध्रम् । न । अवटे ॥ क्षितेःरन्ध्रम् ॥

क्षितिरुहः । पुं । वृक्षे ॥ . रेवति । वृक्ष० । इगुपधस्त्वात्कः । क्षितौ रुहः । सप्तमीतिसमासः ॥ क्षितौ रोहतिवा । वहेरिगुपधेतिकः ॥

क्षितिवदरी । स्त्री । भूवदर्य्याम् । भुइबेरी इतिभाषा ॥

क्षितिवर्द्धनः । पुं । शवे ॥ त्रि । भूमिवर्द्धके ॥

क्षितिव्युदासः । पुं । भुंइरा इतिप्रसिद्धे भूमिगृहे ॥

क्षितिसुतः । पुं । भौमे ॥ नरकासुरे ॥

क्षितीशः । पुं । राज्ञि ॥ श्रीरामे ॥ क्षितेर्भूमेरीशः ॥

क्षित्यदितिः । स्त्री । देवक्याम् ॥

क्षित्वा । पुं । वायौ ॥ क्षयति क्षियति वा ॥ क्षियये क्षिनिवासगत्योर्वा । शीङ्क्रुशीत्यादिनाक्वनिपितुक् ॥ काले ॥

क्षिपः । पुं । क्षेपणे ॥ क्षेप्तरि ॥ क्षिपेरिगुपधेतिकः ॥

क्षिपकः । त्रि । योधे ॥ क्षिपति । क्षिपप्रेरणे । इगुपधज्ञाप्रीकिरःकः । ततोऽज्ञातादौकः ॥ स्त्री । क्षिपका । क्षिपकादीनाञ्चेतीत्त्वाभावः ॥

क्षिपणम् । न । क्षेपणे । क्षिपायाम् ॥

क्षिपणिः । स्त्री । नौकादण्डे ॥ आयुधे ॥ वडिशे ॥ क्षिप्यते ऽनयेतिवा ।

क्षिपेः कक्प्रत्ययः । शिपुमर्जुं क्षेपण मितिवेदभाष्यम् ॥

क्षिपणी । स्त्री । क्षेपण्याम् । नौकाद ण्डे ॥ कृदिकारादिति ङीष् ॥

क्षिपण्युः । पुं । वायौ ॥ क्षिपति । क्षिप० । अनुङ्नदेश्चेतिचकारात् क्षिपेरप्यनुङ् ॥

क्षिपण्युः । पुं । वसन्ते । इष्युज्ज्वलद क्षः ॥ देहे ॥ त्रि । सुरभौ ॥

क्षिपा । स्त्री । क्षेपणे ॥ क्षेपणम् । क्षिप० । भिदाद्यङ् । टाप् ॥

क्षिप्तः । त्रि । प्रेरिते ॥ निक्षेपकृतवस्तुनि । त्यक्ते । नुत्ते । मुक्ते ॥ विकीर्णे ॥ अवज्ञाते ॥ न । रागद्वेषादिवशाद्विषयेष्वभिनिविष्टे चित्ते । चित्तस्यप्रथमभूमौ ॥ क्षिप्यते स्म । क्षिप० । क्तः ॥ वायुग्रस्ते ॥

क्षिप्तकुक्कुरः । पुं । अलर्के ॥

क्षिप्ता । स्त्री । रात्रौ ॥ इतिहलायुधः ॥

क्षिप्नुः । त्रि । निराकरिष्णौ । निराकरणशीले ॥ क्षेप्तृशीलः । क्षिप० । त्रसिगृधिधृषिक्षिपेःक्नुः ॥

क्षिप्रम् । न । शीघ्रे ॥ नवन्दशारविंशे मात्रासंज्ञायाम् ॥ पुष्याश्विन्यभिजिद्धस्तालघु क्षिप्रं गुरु तथा ॥ क्षिप्यति । क्षिप० । स्फायितञ्चीति रक् ॥ शीघ्रार्थे क्रियाविशेषणत्वाद द्रव्येवर्त्तमानः क्लीवे । द्रव्येतु त्रिलिङ्गः ॥ शीघ्रगेच ॥

क्षिप्रकारी । त्रि । शीघ्रप्रयोक्तरि ॥

क्षिप्रपाकी । पुं । गन्धमुण्डे । गर्दभाण्डे । गेंडीतिभाषाप्रसिद्धेवृक्षे । गन्धभादालिया इतिगौडभाषा ॥ त्रि । शीघ्रपाकिनि ॥

क्षिप्रा । स्त्री । अवन्तीतलवाहिन्यांसरिति ॥

क्षिया । स्त्री । अपचये । क्षये ॥ क्षियः । क्षिनिवासगत्योर्वा । भिदाद्यङ् । टाप् ॥

क्षीजनम् । न । कीचकानां नादे ॥

क्षीणः । त्रि । अमांसे । दुर्बले । क्षामे ॥ क्षियते । क्तः । निष्ठायामण्यदर्थे इतिदीर्घः । क्षियोदीर्घादितिनः ॥ धर्मार्थे क्षीणकोशस्य क्षीणत्वम पिशोभते । सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिवेति कामन्दकः ॥

क्षीणचन्द्रः । पुं । विनष्टेन्दुभगाष्टम्योर्मध्यस्थेन्दौ ॥ यथा । कृष्णाष्टमीदृष्ट्वा दृष्ट्वं यावच्छुक्लाष्टमीदलम् । तावत् कालंशशीक्षीणः पूर्णस्तत्रोपरिस्मृतइति ॥

क्षीणवान् । त्रि । क्षयविशिष्टे ॥

क्षीणाष्टकर्मा । पुं । जिने ॥

क्षीयमाणः । त्रि । अपचीयमाने ॥

क्षीरपर्णी । स्त्री । अर्कवृक्षे । विकीरणे ॥

क्षीरपायी । त्रि । दुग्धपानकर्त्तरि ॥

क्षीरमोचकः । पुं । शोभाञ्जने ॥

क्षीरमोरटः । पुं । मोरटे । मधुस्रवे । क्षीरमोरटा इति गौड भाषा प्रसिद्धायां लतायाम् ॥

क्षीरवल्ली । स्त्री । क्षीरविदार्य्याम् ॥ क्षीरव्रतीवल्ली ॥

क्षीरविकृतिः । स्त्री । क्षीरसा इति गौडभाषाप्रसिद्धायां कूर्चिकायाम् ॥ दध्ना सह पयःपक्वं यत् तत् स्याद् दधि कूर्चिका । तक्रेण पक्वं यत् क्षीरं सभवेत्त तक्रकूर्चिका ॥ क्षीरस्य विकृतिः ॥

क्षीरविदारिका । स्त्री । क्षीरविदार्य्याम् ॥

क्षीरविदारी । स्त्री । शुक्लभूकुष्माण्डे । महाश्वेतौषधौ ॥ क्षीरव्रतीविदारी ॥ शुक्लकृष्णभूकुष्माण्डयोः ॥ क्षीरकन्दो द्विधा प्रोक्तो विनालस्तु सनालकः । विनालो रोगहर्त्ता स्याद् द्रव्यकर्म्मा सनालकः ॥

क्षीरविषाणिका । स्त्री । क्षीरकाकोल्याम् ॥ वृश्चिकाल्याम् ॥

क्षीरवृक्षः । पुं । राजादन्याम् ॥ उदुम्बरे ॥

क्षीरशरः । पुं । आमिक्षायाम् । छाना इति गौडभाषा ॥

क्षीरशाकम् । न । दुग्धविकृतौ ॥ अपक्वमेव यद्बद्धं क्षीरशाकं हितं तथा ॥

क्षीरशीर्षः । पुं । श्रीवासे ॥

क्षीरशुक्ला । स्त्री । क्षीरकाकोल्याम् ॥ क्षीरविदार्य्याम् ॥

क्षीरशुक्लः । पुं । जलकण्टके । शृङ्गाटके । सिंघाडा इतिभाषा ॥ राजादने ॥

क्षीरशुक्ला । स्त्री । शुक्लभूकुष्माण्डे ॥ विदार्य्याम् । क्षीरकाकोलिकायाम् । कृष्णभूकुष्माण्डे ॥ क्षीरविशुक्ला ॥

क्षीरसः । पुं । क्षीरसारे ॥

क्षीरसन्तानिका । स्त्री । छाना इति नटक्षीर इति गौडभाषाप्रसिद्धे दुग्धविकारविशेषे । क्षीरसन्तानिका वृष्या स्निग्धा पित्तानिलापहा ॥

क्षीरसमुद्रः । पुं । क्षीराब्धौ ॥ अयं श्वेतद्वीपे वर्त्तते ॥

क्षीरसागरः । पुं । क्षीरसमुद्रे ॥

क्षीरसागरसुता । स्त्री । लक्ष्म्याम् ॥

क्षीरसारः । पुं । मालजिन् इति भाषा प्रसिद्धे क्षीरविशेषे । क्षीरसे ॥ यथा । ईषत्श्लेष्मकरं गौल्यं पित्तघ्नं तर्पणं गुरु । पुष्टिरेषाभिधा तस्य क्षीरसारस्तु क्षीरसः ॥ इति रा० नि० ॥ नवनीते ॥ यथा । क्षीरसारमपनीय शङ्कया स्वीकृतं यदि पलायनं त्व

या । मानसे मम नितान्ततामसे मन्दमन्दम कथं न क्षीयसे क्षीरस्य सारः ॥

क्षीरसिन्धुः । पुं । क्षीरार्णवे ॥

क्षीरस्फटिकः । पुं । क्षीरवर्णस्फटिकविशेषे ॥

क्षीरविक्षीरः । पुं । दुग्धफेने । शार्करे ॥

क्षीरा । स्त्री । काकोल्याम् ॥

क्षीराब्धिः । पुं । क्षीरसागरे ॥ क्षीरस्य अब्धिः ॥

क्षीराब्धिजः । पुं । चन्द्रे । इन्द्रे ॥ शेषे ॥ तार्क्ष्ये ॥ अमृतादिसमूहे ॥ न । सामुद्रलवणे ॥ मौक्तिके ॥

क्षीराब्धिजा । स्त्री । इन्दिरायाम् । लक्ष्म्याम् ॥ क्षीराब्धेर्जाता । जनी० । डः ॥

क्षीराब्धितनया । स्त्री । रमायाम् । लक्ष्म्याम् ॥ क्षीराब्धेः तनया ॥

क्षीरामृतम् । न । मधुरमांसे ॥

क्षीराविका । स्त्री । क्षीराव्याम् ॥

क्षीरावी । स्त्री । दुद्धीतिप्रसिद्धौषधौ । दुग्धिकायाम् ॥ क्षीरमवति । अवरक्षणादौ । कर्मण्यण् । ङीप् ॥

क्षीराह्वः । पुं । सरलद्रुमे ॥

क्षीरिका । स्त्री । राजादने । फलाध्यक्षे । खिरणी इतिभाषा ॥ क्षीरिकायाः फलं वृष्यं बल्यं स्निग्धं हिमगुरु । तृष्णामूर्च्छामदभ्रान्तिक्षयदोषत्रयास्रजित् ॥ अपिच । क्षीरिकायाः फलं पक्वं गुरु विष्टम्भि शीतलम् । कषायं मधुरं साम्लं नातिवातप्रकोपनम् ॥ क्षीरमस्त्यस्याः । अतइनिठनाविति ठन् ॥ परमान्ने । पायसे । खीर इतिभाषा ॥ यथा । शुद्धेऽर्द्धपक्वे दुग्धे तु घृताक्तां स्तण्डुलान् पचेत् । ते सिद्धाः क्षीरिकाख्याता सा सिताज्ययुतोत्तमा ॥ क्षीरिका दुर्जरा बल्या धातुपुष्टिप्रदा गुरुः । विष्टम्भिनी हरेत् पित्तरक्तपित्ताग्निमारुतान् ॥ नालिकेरक्षीरिकान्तु प्रोच्यते शास्त्रतोमया ॥ नालिकेरं तनूकृत्य छिन्नं पयसि गोः क्षिपेत् । सिताग्न्याज्यसंयुक्ते तत् पचेत् मृदुना ग्निना ॥ नालिकेरोद्भवा क्षीरी स्निग्धा शीता तिपुष्टिदा । गुर्वी सुमधुरा वृष्या रक्तपित्तानिलापहा ॥ एवं कुष्माण्डमज्जादीं स्तथा वंशाङ्कुरानपि । कदलीनां फलान्मूलान् कर्त्तव्या क्षीरिकाबुधैरिति ॥ नारङ्गक्षीरिणीम्पथ्य ॥

क्षीरिणी । स्त्री । काञ्चनक्षीरीलतायाम् । तिक्तदुग्धायाम् । पीतदुग्धायाम् । हिमाद्रिजायाम् ॥ क्षीरिणी तिक्तशीता च रेचनी शोफतापनुत् ।

क्षमिलोमकफमोच पित्तज्वरहराप
रः ॥ क्षीरकाकोल्याम् ॥ दुग्धिका
याम् ॥ क्षुद्रदुग्धिकायाम् ॥ मेदायां ॥ गम्भा
र्याम् ॥ क्षीरमस्त्यस्याम् । इन् । ङीप् ॥

क्षीरी । पुं । क्षुद्राम् ॥ खर्ज्जूरवृक्षे ॥ राजा
दने ॥ दुग्धपाषाणे ॥ वटे ॥ वृक्षे ॥
सोमवल्लायाम् ॥ काकोल्यां ॥ क्षी
रमस्त्यस्मिन् वा । अतइनिठना
विती निः ॥

क्षीरिवृक्षः । पुं । स । क्षीरयुक्तवृक्षप
ञ्चके ॥ यथा । न्यग्रोधोदुम्बराश्वत्थ
पारिशप्लक्षपादपाः । पञ्चैते क्षीरि
णो वृक्षास्तेषां त्वक् पञ्चवल्कलम्
॥ केचित्तु पारिशस्थाने शिरीषं वे
तसं परे । वदन्तीति विशेषः ॥ क्षीरिवृ
क्षाः हिमा वर्ण्या योनिरोगव्रणाप
हाः । रूक्षाः कषाया मेदोघ्ना वि
सर्पामयनाशनाः ॥ शोथपित्तकफा
स्रघ्नाः स्तन्या भग्नास्थियोजकाः । ए
षां त्वग्गुणाः । त्वक्पञ्चकं हिमं
ग्राहि व्रणशोथविसर्पजित् । तेषां प
ल्लवगुणाः । तेषां पत्रं हिमञ्च ग्राहि
कफवातास्रनुल्लघु । विष्टम्भाध्मान
जित् तिक्तं कषायं लघु लेखनमि
ति राजनिर्घण्टः ॥

क्षीरी । स्त्री । क्षीरिवृक्षे ॥ खिरगो
का इति गौडभाषाप्रसिद्धे वृक्षे । दु
ग्धपाषाणे । वज्राके ॥ दुग्धिकायाम् ॥

क्षीरीशः । पुं । क्षीरकञ्चुकी इति
गौडप्रसिद्धे क्षुपकदे ॥

क्षीरेयी । स्त्री । पायसे ॥ यथा । क्षी
रेयं पायसं प्रोक्तं परमान्नञ्च सू
रिभिरिति हलायुधः ॥

क्षीरोदः । पुं । दुग्धसमुद्रे । क्षीराब्धौ
॥ क्षीरमुदकं यस्मिन् । उत्तरपदस्य
चोदकस्योदादेशः ॥

क्षीरोदतनया । स्त्री । लक्ष्म्याम् ।
श्रियाम् ॥ क्षीरोदस्य तनया ॥

क्षीरोदतनयापतिः । पुं । विष्णौ ॥

क्षीरोदतनयः । पुं । चन्द्रे ॥

क्षीवः । त्रि । मत्ते ॥ क्षीवते स्म । क्षी
ब मदे । अकर्मकत्वात् कर्त्तरि क्तः
। अनुपसर्गात् फुल्लक्षीबेतिसाधुः ।
कोवा ॥

क्षीवा । त्रि । मत्ते ॥ बाहुलकात् कनिन् ॥

क्षुः । पुं । सिंहे ॥

क्षुणः । पुं । अरिष्टवृक्षे ॥

क्षुण्णः । त्रि । अभ्यस्ते ॥ मर्दिते । चू
र्णीकृते । सम्पिष्टे ॥ क्षुदेः क्तः ॥

क्षुत् । स्त्री । क्षुते । क्षवे । छिक्काया
म् ॥ क्षवणम् । टुक्षु शब्दे । सं०
क्विप् । तुक् ॥ वलिना क्षुतं सकृत् ॥

क्षुतम् । न । नासिकातः सशब्दवायो
र्निःसरणे । क्षवे ॥ क्षवमकनम् ।

नित्यं ग्रहाविः कार्यश्छिद्रितु वामके क्षुताच्चे भयं याम्यामग्निभर्वं सुरद्विषिकाच्चि श्रीभःसमुद्राशये ।वायव्यां ब्रह्मगन्धसलिलं दिव्याङ्गनाचोत्तरे ऐशान्यां मरणं ध्रुवंनिगदितं हिमवद्यांसवाने ॥ ज्येष्ठीकृते क्षुतेऽप्येव मूर्धुःकिञ्चिन्न कोविदाः ॥ आसने शयने दाने भोजने वस्त्रसङ्ग्रहे । विवादेच विवाहेच क्षुतं सततं शोभनम् ॥ असंस्कृतमुखा क्षुन्निषेधो यथा । नासंस्कृतमुखः कुर्याद्धास्यं क्रुध्यां तथा क्षुतम् ॥ यत्कृत्यं सज्जनकृते क्षुतेमेवं तदेव चि ॥ त्रि । माणादिनालोच्यीकृते ॥ क्षवथम् । टुक्षु शब्दे । भावेक्तः ॥

क्षुतकः । पुं । राजिकायाम् ॥

क्षुताभिजननः । पुं । कृष्णसर्षपे । राजी इति भाषा ॥ क्षुतमभिजनयति । नन्द्यादित्वात् ल्युः ॥

क्षुत्करी । स्त्री । सर्पाख्याम् ॥

क्षुत्पिपासे । स्त्री । द्वि० । लोभभार्ययोः ॥ यथा । क्षुत्पिपासे लोभभार्ये भन्येमान्येचपूजिते । याभ्यांव्याप्तं जगत्सर्वं नित्यंचिन्तातुरं भवेदिति ॥ चिन्तातुरम् क्षुत्पिपासा मायकामजचिन्तातुरमित्यर्थः ॥

क्षुद्रः । त्रि । अधमे ॥ क्रूरे ॥ कृपणे ॥ अल्पे ॥ दरिद्रे ॥ कलाम्बेषिणि ॥ क्षुणत्ति । क्षुदिर् सम्पेषणे । स्फायितञ्चीतिरक् ॥

क्षुद्रकण्टकारी । स्त्री । अग्निदमन्याम् ॥

क्षुद्रकण्टकी । स्त्री । इत्याख्याम् ॥

क्षुद्रकण्टारिका । स्त्री । क्षुपविशेषे । अग्निदमन्याम् ॥

क्षुद्रकण्टिका । स्त्री । कण्टकारिकायाम् ॥

क्षुद्रकम्बुः । पुं । शङ्खनखे । शम्बूके ॥

क्षुद्रकारवेल्ली । स्त्री । कारवेल्लविशेषे । कारवेल्याम् । वनकरेला इतिभाषा ॥

क्षुद्रकारविका । स्त्री । क्षुद्रकारवेल्याम् ॥ इतिराजनिर्घण्टः

क्षुद्रकुलिशः । पुं । न । वैक्रान्तमणौ ॥

क्षुद्रकुष्ठम् । न । स्वल्पकुष्ठरोगे ॥ तदेकादशविधं यथा । एकं कुष्ठं स्मृतं पूर्वं गजचर्मततः परम् । ततश्च चर्मदलं प्रोक्तं ततश्चापिविचर्चिका ॥ विपादिकाभिधावैवपामा कच्छूस्ततःपरा । ततोदद्रुश्चविस्फोटः किटिभश्चततः परम् ॥ ततश्चालसकंप्रोक्तं शताहश्च ततः परम् । क्षुद्रकुष्ठानि चैतानि कथितानि भिषग्वरैरिति ॥

क्षुद्रखदिरः । पुं । दुष्खदिरे ॥

क्षुद्रगोक्षुरकः । पुं । छोटागोखरू इति

भाषा प्रसिद्धे त्रिकण्टके ॥

क्षुद्रघण्टिका । स्त्री । किङ्किण्याम् । घुंघरू कौंधनी कर्धनी इति च भाषा ॥ घण्टेव । इवेतिकन् । यद्वा । घण्टयति घण्टते वा । घटिदीप्तौ । ण्वुल् । क्षुद्रा चासौ घण्टिका च ॥

क्षुद्रघोली । स्त्री । चिविल्लिकाक्षुपे ॥

क्षुद्रचञ्चुः । पुं । क्षुपविशेषे । त्वक्सारभेदिन्याम् ॥ स्त्री । पक्षिणां स्वल्पचञ्च्वाम् ॥

क्षुद्रचन्दनम् । न । रक्तचन्दने ॥

क्षुद्रचिर्भिटा । स्त्री । गोपालकर्कट्याम् । कचरी इति भाषा ॥

क्षुद्रचूडः । पुं । खरबल्लखगे । गृधलक्के ॥

क्षुद्रजन्तुः । पुं । स्वल्पजन्तौ ॥ आनकुलात् क्षुद्रजन्तवः । क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः । शतं वा प्रसृतौ येषाञ्च केचिदानकुलादपि ॥ क्षुद्रश्चासौ जन्तुश्च ॥ शतपद्याम् ॥

क्षुद्रजम्बूः । स्त्री । भूमिजम्ब्वाम् । ह्रस्वफलायाम् ॥

क्षुद्रजातीफलम् । न । आमलके ॥

क्षुद्रजीरकम् । न । कणाजीरके । सुगन्धे ॥

क्षुद्रजीवा । स्त्री । जीवन्त्याम् ॥

क्षुद्रतुलसी । स्त्री । अर्जके ॥

क्षुद्रदंशी । स्त्री । क्षुद्रदंशिकायाम् । छोटडांस इति भाषा । मसडू इति पर्वतीय भाषा ॥

क्षुद्रदुःस्पर्शा । स्त्री । अग्निदमन्याम् ॥

क्षुद्रदुरालभा । स्त्री । स्वल्पदुरालभायाम् । मरुस्थायाम् । मरुसम्भवायाम् ॥

क्षुद्रदुस्पर्शा । स्त्री । अग्निदमन्याम् ॥

क्षुद्रधात्री । स्त्री । कर्कटवृक्षे ॥

क्षुद्रधान्यम् । न । कङ्ग्वादिकुधान्ये । तृणधान्ये ॥ क्षुद्रधान्यमनुष्णं स्यात् कषायं लघु लेखनम् । मधुरं कटुकं पाके रूक्षञ्च क्लेदशोषकम् ॥ वातकृद्बद्धविट्कञ्च रक्तपित्तकफापहम् ॥

क्षुद्रनासिकः । त्रि । स्वल्पनासायुक्ते । नःक्षुद्रे ॥

क्षुद्रपत्रा । स्त्री । चाङ्गेर्याम् ॥

क्षुद्रपत्री । स्त्री । वचायाम् ॥ इति राजनिर्घण्टः ॥

क्षुद्रपनसः । पुं । डहौ । लकुचे ॥ क्षुद्रश्चासौ पनसश्च ॥

क्षुद्रपर्णः । पुं । अर्जके ॥ त्रि । सूक्ष्मपर्णे ॥

क्षुद्रपाषाणभेदा । स्त्री । क्षुपविशेषे । चतुष्पत्र्याम् । कन्दरोद्भवायाम् । शैलोद्भवायाम् ॥

